॥ निम्मलपभावधवलो, भुवणुज्जयारप्पचीणकरणा जे॥
तवगणगयणे सूरा, जयतु ते नेमिसूरिंदा ॥ १ ॥

सर्वतन्त्रस्वतन्त्रचातुर्यविशारदश्रीमत्तपोगच्छाचार्य-
भट्टारकश्रीविजयनेमिसूरीश्वरविनेय-

सिद्धान्तवाचस्पति-न्यायविशारद-अनुयोगाचार्य-
ओँ ह्रीँ श्रीँ महोपाध्यायश्री
उदयविजयगणिना
विनिर्मिता ॥

# ॥ जैनतत्त्वपरीक्षा. ॥

तस्य चाय
प्रथमो वर्ग ॥

राजनगर (अमदावाद) स्थनागजीभूधरारव्यरथ्या-
निवासि-येवरीयाशाखीय-हीराचन्द्रतनुजनुर्जमना-
दासद्रविणसाहाय्येन मुद्रयित्वा
जैनग्रन्थप्रकाशकसभाया
कार्यवाहक-
शा वाडीलाल बापुलाल-इत्यनेन
प्राकाट्यं नीत ॥
प्रत ५००.        स १९७३        सने १९१७.
मूल्य ०-४-०

## ॥ ग्रन्थोपोद्घातः ॥

॥ नन्दन्तु नम्रा प्रणतिततयो वीतरागपरमगुरुपदसरोजयोः ॥

इह खलु विश्ववलये तावद्विदितमेतद्विज्ञानकलाकलापवतो विद्वर्गस्य पीवरभागधेयस्य यदुताविद्यासन्तमसैकार्णवीभूते मोहमहाशैलूषवशनानानर्त्तनविधिनार्तितभूतसमुदये रुचिरतत्त्वारुचिपापानुपरतिक्रोधमदनिकृतिप्रभृतिसम्परायवर्गान्तःकरणशरव्यादिपास्तनव्यानर्थपरम्परामावल्ये कल्पयत्यपि काले कलावाखण्डलास्पदमखण्डे मेदिनीखण्डे सत्तर्कविकल्पमण्डनमुख्याशुनिपुणमेधाविमण्डलचमत्कारकारितया हिताहितालोकलोचनतया प्रविदिते भववारिधिनिमज्जज्जन्तुजातयानपात्रे कनक इव निकषच्छेदतापकोटित्रितयपरीक्षिते श्रुतिमात्रेणापि द्वेषिजनजातस्यापि सुखमावहति स्वतःप्रतिष्ठिततत्त्वनिकुरम्बे कुतीर्थिकोपन्यस्तकुहेतुव्राताशक्यबाधस्वरूपे मुद्राङ्कितरूप्यक इव स्यान्मुद्रामुद्रितत्वेन सत्यस्वरूपेऽस्मिञ्जिनप्रणीतप्रवचने नास्त्येव परीक्षार्हत्वम् । अपि च न चैतस्याः परीक्षाया यद्यपि परतीर्थिकोपरचितकुयुक्तिगिरिविभेदनवज्रेषु सम्मतितर्कानेकान्तजयपताकास्याद्वादरत्नाकरतद्वतारिकाप्रमाणमीमांसास्याद्वादमञ्जरीन्यायालोकखण्डखाद्यादिकेषु प्रमाणतर्कग्रन्थेषु तदत्रप्रतिष्ठितौ किमपि क्षुण्णत्वम् । तथाऽप्यर्वाचीनकुयुक्तिविप्रलम्भविप्रलब्धमनसां मनस्विनामुपकारकारितया नास्या निष्प्रयोजनतारेकारणोपि ॥ किञ्चानेकग्रन्थसमयसमवायसारसन्दोहरूपत्वेनाध्येतॄणामनायासतस्तत्तद्विषयकव्यक्तबोधविधायितया सफलत्वमेवास्या इति दिक् ॥

प्रणयने चास्याः सिद्धान्तोपनिषद्विचारपारावारपारीणानां मौखप-
रवादिवारणताराकान्तैकान्तवादवादमदमथनपञ्चाननानां विविधविष-

## ॥ ग्रन्थोपोद्घातः ॥



॥ नन्दन्तु नम्रां प्रणतिततयो वीतरागपरमगुरुपदसरोजयोः ॥

इह खलु विश्ववलये तावद्विदितमेतद्विज्ञानकलाकलापवतो विद्वद्वर्गस्य पीवरभागधेयस्य यदुताविशासन्तमसैकार्णवीभूते मोहमहाशैलूषवशनानानर्त्तनविधिनर्त्तितभूतसमुदये रुचिरतत्त्वारुचिपापानुपरतिक्रोधमदनिकृतिप्रभृतिसम्परायवर्गान्तःकरणवृत्त्यादिपारतन्त्र्यानर्थपरम्परामानल्ये कलयत्यपि काले कलावाखण्डलास्पदमखण्डे मेदिनीखण्डे सत्तर्कविकल्पमण्डनसुशास्त्रनिपुणमेधाविमण्डलचमत्कारकारितया हिताहितालोकलोचनतया प्रविदिते भववारिधिनिमज्जज्जन्तुजातयानपात्रे कनक इव निकषच्छेदतापकोटित्रितयसुपरीक्षिते श्रुतिमात्रेणापि द्वेषिजनजातस्यापि सुखमानदाति स्वतःप्रतिष्ठिततत्त्वनिकुरम्बे कुतीर्थिकोपन्यस्तकुहेतुव्रातशातनाधस्वरूपे मुद्राङ्कितरूप्यक इव स्यान्मुद्रामुद्रितत्वेन सत्यस्वरूपेऽस्मिञ्जिनप्रणीतप्रवचने नास्त्येव परीक्षार्हत्वम् । अपि च न खल्वस्याः परीक्षाया यद्यपि परतीर्थिकोपरचितकुयुक्तिगिरिविभेदनवज्रेषु सम्मतितर्कानेकान्तजयपताकास्याद्वादरत्नाकरतदवतारिकाप्रमाणमीमांसास्याद्वादमञ्जरी न्यायालोकखण्डखाद्यादिकेषु प्रमाणतर्कग्रन्थेषु तत्त्वप्रतिष्ठितौ क्वमपि क्षुण्णत्वम् । तथाऽप्यर्वाचीनकुयुक्तिविप्रलम्भविप्रलब्धमनसां मनस्विनामुपकारकारितया नास्या निष्प्रयोजनत्वारेकाकणोऽपि ॥ किञ्चानेकग्रन्थसमयसमवायसारसन्दोहरूपत्वेनाध्येतॄणामनायासतस्तत्तद्विषयकव्यक्तबोधविधायितया सफलत्वमेवास्या इति दिक् ॥

प्रणयने चास्याः सिद्धान्तोपनिषद्विचारपारावारपारीणानां प्रौढपरवादिवारणवाराक्रान्तैकान्तवादवादमदमथनपञ्चाननानां विविधविष्ट-

मविषयाशीविषविषविलुप्तभावजीवनजन्तुजातजाङ्गुलीमन्त्रायमाणाना-मनवद्यविद्याविद्याधरीलीलाविलाससफलीकृतजनीनामपारासारससारा-रण्यविनिर्जिगमिषुनिरुपसर्गसन्मार्गमार्गणाभिरतभव्यजनत्रातशरण्यानां परहितकरणैकार्पितकरणानां परोपकारकर्मैककर्मठशिरोमणीनां बाह्या-भ्यन्तरानवरतसदाचरणचरणकरणसमितियोगयोगकरणानेकविशुद्धि-त्रिपथगापगामवाहनिर्धौतान्तरकलुषकल्मषाणामखिलप्रवचनमातृस-मितिगुप्तिजनोत्करपुण्याकराणामनल्पाभीष्टैकान्तिकात्यन्तिकफलप्रदा-नकल्पद्रुमाणामात्महिताहितविवेकयाथात्म्यावबोधप्रतिपन्थिमोहसन्त-मसविध्वंसतरणीनामशेषसच्चार्णवोल्लासेन्दुवदनानां भरतभूमिभूप-णानाममेयगुणमणिमकराकरायमाणानां सर्वतन्त्रस्वतन्त्राणां प्रच-ण्डोद्दण्डसंसारार्णवनिमज्जनैकनिबन्धनमनोवृत्तिवशीकारमहामन्त्रनिखि-लश्रुतरत्नाराधनोपचारसदाम्नागमविदिताङ्गोपाङ्गादियोगविशेषविद्यादि-पीठपञ्चकाद्यनुष्ठानसमाचरणगणभृदादिमहापुरुषसमाराधितश्रीसूरिम-न्त्रसमाराधनावाप्तगणभृत्पदवीविभूषितानामखण्डमेदिनीविदितज्ञानोपदे-शादिप्रभावातिशयसंस्मारिताती तयुगप्रधानानामनेकभूपत्यमात्यकोटी-श्वरेभ्यवर्गादिपर्षदुपासितपादारविन्दानां स्वपादपावनीकृताखिलवलया-नां मतपत्साम्राज्यानां सकलसूरिपुरन्दरभट्टारकश्रीतपोगच्छाचार्यश्री-मद्विजयनेमिसूरिपादानां प्रसत्तिरेव परमकारणं मन्दमते-र्मादृशस्य ॥ इतोऽवलोक्यमाने विषयविभागे पूर्वं तावदेतस्या वर्गेऽ-स्मिन् परीक्षापातनिकाया भवस्वरूपोपदर्शनपूर्वकमसारससारात्पार-पारदर्शनतरण्डस्य तत्त्वावबोधस्यादेयता समस्ति। ततश्च परीक्षालक्षण-मुपवर्ण्य प्रमितिलक्षणप्रतिपादनमिषेण तत्स्वरूपविसंवादिनां निराचि-कीर्षितानां योगसाङ्ख्याद्वैतवादिबौद्धादीनां लक्षणगतविशेषणव्यावृ-त्तिविधया सम्मतप्रमाणदूषणानुवादनिरूपणम्, प्रमाणभेदकीर्तनम्, अनेक-दर्शनप्रतिपन्नप्रमाणविभागगणनाप्रतिपादकपद्यानि, तदागृहीतप्रमाण-

निराकरणदिशा सांव्यवहारिकप्रत्यक्षविभागोपवर्णनम्, इन्द्रियाणां प्रा-
प्यकारित्वाप्राप्यकारित्वदर्शनम्, बौद्धाभिमतश्रवणाप्राप्यकारित्वनि-
रसनयुक्तिकदम्बकम्, श्रोत्रस्य शब्दकृतानुग्रहदर्शने भगवन्तस्तीर्थकरा
एव निदर्शनविषयीकृता आगमवचनेन, व्यञ्जनावग्रहोपपन्नताद्वारेण
श्रोत्रप्राप्यकारितासिद्धिः, सामान्यावबोधात्मकदर्शनान्तर्गतचक्षुर्दर्शनादि-
विभागमुखेनापि तत्सिद्ध्युपवर्णनम्। कर्णप्राप्यकारितासिद्धिनिगमन
रत्नप्रभसूरिपादप्रदर्शितेन पथेन ॥ नैयायिकसम्मतशब्दगुणत्वखण्डनो-
पक्रमः ॥ उपपत्तिपूर्वकं श्रवणपथनिरूपणम्, शब्दद्रव्यत्वसिद्धियु-
क्तिकदम्बकम्, अन्तरान्तरानेकान्तवादसिद्धिस्समवायादिखण्डनञ्च,
उच्छृङ्खलनैयायिकपरिकल्पितशब्दवायुगुणत्वापाकृतिः, शब्दगुणकत्वेनै-
व नभस उपपन्नतेतरथा तन्नोपपद्येतेत्यभिमानवतां नैयायिकानां सयुक्तिक-
माकाशस्य स्वतः प्रतिष्ठिततत्त्वत्वख्यापनेन निराकरणम्, तदन्तःपाति-
न्या एकस्मिन्नपि नभःप्रदेशेऽनन्तपरमाणुयावद्द्रव्यव्यवस्थितेः सोपपत्तिक
सनिदर्शनं चोपवर्णनम्, नाममात्रेण धर्मादिद्रव्याणां प्रज्ञापनम्, एतेन ये
केचनानाघ्राय जैनदर्शनगन्धमपि ज्ञानलवदुर्विदग्धतमा अविकलकेवला-
लोकबलावलोकितलोकालोकप्रतिष्ठितार्थसार्थार्हद्वदनविनिर्गतसद्रूपत-
त्त्वान्यनाकलय्यानास्वाद्य तद्व्याख्यानसुस्वादुसुधास्यन्दं दीप्रायां प्रदी-
पकलिकायां शलभायमाना जैनाभिमततया पदार्थव्याख्या विद-
धतो जैनजातानभिप्रेत विषमविषाहारोद्गारकल्पमसत्यतममुन्मत्ता इवो-
ल्लपन्त्यधमाध्वन्यात्मानं निपातयन्तस्ते तद्रूपा एव प्रसूचिता सन्मार्गाभि-
लाषुकाणां पुरः॥ आकाशस्य द्रव्यतैव नास्तीति नास्तिकानुकारिनव्यनै-
यायिकमतपरासनम्, पौद्गलिकत्वेऽपि शब्दस्य पुद्गलप्रक्षेपातिचारा-
च्छब्दानुपातातिचारस्यातिरिक्ततासिद्धिः, बौद्धपरिकल्पितशब्दायतन-
निरासः, अनेकागमग्रन्थपाठोपन्यासपूर्वकं शब्दपौद्गलिकत्वोपदर्शनाभि-
प्रायेणानेकतत्त्वोपवर्णनम्, सनिदर्शनं वर्गणाकल्पनप्रयोजनम्, यन्त्राहतत्वे-

सोपपत्तिमाना परकल्पितकुयुक्तिनिराकरणपूर्वकं ध्वनिद्रव्यत्वसिद्धिः ॥ शब्दद्रव्यत्वसिद्धिनिगमनम् ॥ क्रमश एतान् विषयान्स्वरूपमहमेतस्मिन् वर्गे॥ अथ परगुणपरमाणुमप्युन्नतगिरीन्द्रमिवालोकयन्तः परकीय दोषपरिकरमपि गच्छतः स्खलनं क्वापीत्यादिन्यायावलम्बनेन समादधतो मात्सर्यमेर्ष्यालेशेनाप्यनवदिग्धमानसाः सन्ति विद्वांसः कतिपये तत्त्वातत्त्वविवेकपरिनिष्ठितास्खलत्स्वपरतन्त्रप्रचारबुद्धिविभवा येषामवलोकनेन शब्दतोऽर्थतश्चाशुद्धिं परित्यजन् सन्दर्भशुद्धिं चानुसरन्नैदम्पर्यार्थप्राधान्येनोपजीवंस्तत्पक्षाणां पूर्वापरीभावहेतुमासादयन् परगुणासहमानभाषानभिज्ञजनोत्प्रेक्षितदूषणगणमगणयन्नयं ग्रन्थ आसादयिष्यत्यापुष्पदन्तोदयं स्वास्थितिमित्याशास्ते श्रमणगुणमकरन्दद्विरेफः सूरिक्रमकमलोपासको ग्रन्थकारः ॥



॥ श्री ॥

## सुज्ञ बन्धुओ.

आ ग्रन्थनी रचना करनार परमपूज्य परमोपकारी परमकृपालु प्रातःस्मरणीय पूज्यपाद विहितभगवतीयोगोद्वहनादिमवचनोक्तशुद्धक्रियाकलाप विद्यापीठादिप्रस्थानपंचकाराधक समाराधितश्रीसूरिमन्त्र अमेयमहिमानिधान भारतमेदिनीमार्तण्ड जगद्भिभूषण भट्टारक श्रीमत्तपोगच्छाचार्य श्रीमान् विजयनेमिसूरीश्वरजीमहाराजना शिष्यरत्न सिद्धान्तवाचस्पति न्यायविशारद अनुयोगाचार्य ओं ह्रीँ श्री महोपाध्यायजी श्रीमान् उदयविजयजीगणिजी महाराज छे

ग्रन्थकर्तामहाराजश्रीने तथा न्यायवाचस्पति शास्त्रविशारद अनुयोगाचार्य ओं ह्रीँ श्रीँ महोपाध्याय श्रीदर्शनविजयजी गणिजीने, तथा अनुयोगाचार्य पन्यासजी श्रीप्रतापविजयजीगणिजीने संवत १९६९ मा कपडवंजमा भट्टारक सूरीश्वरजीमहाराजश्रीए भगवतीजीना योगोद्वहन करावी श्रीसंघना विशाल हर्ष साथे गणिपद पन्यासपद अनुयोगाचार्यपद आप्या हता ते सुविदितज छे.

हालना चालू वर्ष १९७३ ना मागशर वदी ३ ने दिवसे श्रीसादरी–शहेरमा भट्टारक सूरीश्वरजीमहाराजसाहेबे श्रीमान् न्यायवाचस्पति शास्त्रविशारद अनुयोगाचार्य ओं ह्रीँ श्रीँ महोपाध्यायजीश्री दर्शनविजयजीगणिजीमहाराजने तथा ग्रन्थकर्ता महाशय श्रीमान् सिद्धान्तवाचस्पति न्यायविशारद अनुयोगाचार्य ओं ह्रीँ श्रीँ महोपाध्यायजी श्रीउदयविजयजीगणिजीने-न्यायवाचस्पति शास्त्रविशारद तथा सिद्धान्तवाचस्पति न्यायविशारद

बिरुदो साथे उपाध्यायपद श्रीसंघना अपार हर्ष साथे आपवामा आव्यु छे-आ शुभप्रसगे-गोलवाड विगेरे प्रान्तना हजारो माणसो तथा-अमदावाद-खभात-भावनगर-बोटाद विगेरे स्थलोना शेठ माणेकलालभाइ मनसुखभाइ-शेठ प्रतापसिंहभाइ मोहोलालभाइ तथा तत्त्वविवेचक सभाना सभासदो तथा शेठ अमरचद जसराज-शेठ पोपटभाइ अमरचद-शेठ छगनभाइ अमरचद विगेरे अनेक गृहस्थो पधार्या हता

आ शुभ प्रसगे-सादरीना-नथमलजी मूलचदवाला तथा भूरजी पूनमचद विगेरे ग्रहस्थोए समवसरणनी रचना-नवकारशीओ विगेरे शासनोन्नति कार्यमा पुष्कल द्रव्यनो व्यय कर्यो हतो तेमज शेठ मनसुखभाइना पुत्ररत्न शेठ माणेकलालभाइ मनसुखभाइए पण आ शुभप्रसगे-जुदा जुदा गामोना धार्मिक-कार्योमा पुष्कल सखावतो करी वीतराग धर्मनी अनुमोदना करावी छे-तेमज अमदावादनी श्री तत्त्वविवेचक सभाना मेम्बरो तथा भावनगरना शेठ अमरचद जसराज तथा खभातना शेठ पोपटभाइ अमरचद तथा शेठ छगनभाइ अमरचद विगेरे ग्रहस्थोए पण शासनोन्नतिना सत्कार्योमा द्रव्यव्यय कर्यो छे आ प्रसगे पन्यासजीश्री प्रेमविजयजीगणीजी तथा पन्यासजी श्रीसुमतिविजयजीगणिजीने पण उपाध्यायपद आपवामा आव्यु छे आवी रीते जे महात्माना उपाध्यायपदना महोत्सव प्रसगे शासनोन्नतिना शुभकार्यो थया तेमज जेमना विद्वत्ता विगेरे सद्गुणो सुप्रसिद्धज छे तेज महात्मा सिद्धान्तवाचस्पति न्यायविशारद अनुयोगाचार्य ओंह्रीं श्री महोपाध्यायजी श्रीउदयविजयजीगणिजी आ ग्रन्थना कर्ता छे आ ग्रन्थ उपरात तेओश्रीए बीजा पण अनेक ग्रन्थोनी रचना करी छे अमे आशा राखीये छीये के हलवे हलवे ते ग्रन्थो

पण जनसमाजमा प्रसिद्ध करवा अमो भाग्यशाळी बनीशु, आ ग्रन्थकर्ता महात्मानी जन्मभूमि श्रीस्तंभतीर्थ ( खंभात ) छे तेओश्रीनो श्रीश्रीमालि ( विशाश्रीमालि ) ज्ञातिना शा छोटालाल पानाचंदना कुलदीपक पुत्ररूपे रत्नकुक्षिणी माता बाइ परसननी कुक्षिये संवत् १९४४ मा जन्म धारण कर्यो हतो, अने लघुवयमाज तेओ साहेबजी दीक्षा लइ आवा सुशोभितपदो मेळववा तथा ग्रन्थो बनाववा भाग्यशाळी नीवडया छे.

प्रसंगोपात अमारे कहेवु जोइये के– भट्टारकश्री सूरीश्वरजी महाराजना शिष्यरत्नोपैकी न्यायवाचस्पति शास्त्र विशारद अनुयोगाचार्य ओं ह्रीं श्रीं महोपाध्यायजी दर्शनविजयजीगणिजी महाराजे पण "स्याद्वादबिन्दु" विगेरे न्यायना अपूर्वग्रन्थो बनावेला छे ते पण अमे आशा राखीये छीये के जैनप्रजानी सन्मुख प्रसिद्धिमा मूकवा भाग्यशाळी बनीशु तेमज बीजा शिष्यरत्न अनुयोगाचार्यपंन्यासजीश्रीप्रतापविजयजीगणिजी महाराजे पण "नूतनस्तोत्रसंग्रह" तथा "प्राकृतरूपावली" ग्रन्थो बनाव्या छे जे प्रसिद्ध थयेला छे. तेमज तेओश्रीए बनावेला बीजा पण ग्रन्थो छे तेमज मर्हुम शिष्यरत्न प्रवर्तक श्रीयशोविजयजी महाराज पण एक नामीचा वैयाकरण तथा शीघ्रकवि तरीके प्रसिद्ध हता अने तेओनो बनावेलो– "स्तुतिकल्पलता" नामनो ग्रन्थ प्रसिद्धिमा मूकायेलो छे श्रीमान् शिष्य पद्मविजयजीमहाराजनी बनावेली "जिनस्तवनचोवीशी" पण प्रसिद्धिमा मूकायेली छे तेमज भट्टारकश्रीमान्ना प्रशिष्य अने ग्रन्थकर्ता महाराजना शिष्य श्रीमान् नन्दनविजयजीमहाराजनो बनावेलो "स्तोत्रभानु" नामनो ग्रन्थ

प्रसिद्धिमा मूकावेलो छे

ग्रन्थकर्ता तेमज उपर्युक्त ग्रन्थकर्ताओ के जेओए जैन-प्रजाने ज्ञानदान करी उपकार कर्यो छे तेओनो अन्त करणपूर्वक आभार मानीये छीये, अने आवा शिष्यरत्नोने विद्वान् बनावनार भट्टारकश्रीमान् सूरीश्वरजीमहाराजनो पण अमो वारवार अन्त करणपूर्वक आभार मानीये छीये, तेमज उपर्युक्त महात्माओ तथा बीजा शिष्योने ज्ञानमा मदद करनार शेठ मनसुखभाइ भगुभाइ तथा तेमना पुत्ररत्न शेठ माणेकलालभाइने धन्यवाद आपवापूर्वक तेओश्रीनी धर्मकार्यनी अमो अनुमोदना करीये छीये

आ ग्रन्थ छपाववामा द्रव्यनी सहाय आपनार-माडवीनी पोळना रहीश-वेवरीया जमनादास हीराचदनो पण अमो आभार मानीये छीये-छेवटे उपर्युक्त महात्माओ जैनकोमना हितने माटे अनेक ग्रन्थोनी रचना करे तेमज अन्य मुनिमहाराजाओ पण आवीज रीते जैनकोमना हितने माटे ग्रन्थोनी रचना करी उपकार करे तेटलु कही अमे आ प्रस्तावना सपूर्ण करीये छीये

आ ग्रथमा मुद्रणदोषथी या दृष्टिदोषथी भूल रही गइ होय तो सुधारी सुज्ञो वाचशे

लि

श्रीश्रमणसघ चरणकमलोपासक

वाडीलाल बापुलाल शाह



॥ अर्हम् ॥

॥ ऐदयुगीनश्रीसत्त्वशरण्यक्रमक्रजेभ्यो निखिलगुणरत्नरोहण-
गिरिभ्यो भट्टारकश्रीतपोगच्छाचार्यश्रीमद्-
विजयनेमिसूरीश्वरेभ्यो नमो नमः ॥

॥ तदन्तेवासिविनेयसिद्धान्तवाचस्पति-न्यायविशारद-
अनुयोगाचार्य-ओं ह्रीं श्री महोपाध्याय-श्रीमद्

उदयविजयगणिना
विनिर्मिता ॥

# ॥ जैनतत्त्वपरीक्षा. ॥

सुरासुरनतं नौमि, वीरं विश्वार्थवेदिनम् ।
सर्वकर्मविनिर्मुक्तं, वागीशं शिवसौख्यदम् ॥१॥
नमस्कृत्य तमोपोहं, स्यात्कारकिरणान्वितम् ।
तीर्थकृत्सूक्तमार्त्तण्डं, भव्यपाथोजबोधकम् ॥२॥
ऐदयुगीनसङ्घस्या-धिपं नत्वा मुहुर्गुरुम् ।
नेमिसूरिं मुदा वक्ष्ये, जैनतत्त्वपरीक्षणम् ॥३॥

इह ह्यनादिमहामोहमतङ्गजमालिन्यनवरतदुःखावर्त्तपरम्परापरिगते जन्मजरामरणहर्यामर्षरोगोद्वेगशोकाधिव्याध्युपाध्युपद्रवसङ्कटमकरशतसहस्रोपनिपातसङ्कुले सभेदप्रभेदनारकतिर्यग्नरामरगतिचतुष्कदिक्चक्रवाले इष्टानिष्टवियोगसम्प्रयोगवीची-

मालाकरम्बितेऽनन्तानुबन्ध्यादिकषायपातालकलशावगाढमूले रागद्वेषाद्यसायवाडवानलदन्दह्यमानानन्तजन्तुमालाकुले निचित्रकर्मपरिणत्यगाधसलिले भीमे भवार्णवे निमज्जता तदुत्तितीर्पूणा जन्तूना तदुत्तरणतन्त्र तत्त्वाववोधतरण्ड एव सुक्षम ॥ यदभ्यधायि,

"विना ज्ञान च चारित्र, कर्मणा न विमोचनम् ।
न सम्यक्त्व विना ते तु, तच्च तत्त्वावबोधत ॥१॥
ततश्च कर्मनिर्मुक्ते–र्भवेन्मुक्तिपुरीं प्रति ।
गमन भव्यजन्तूना, परमानन्ददायकम् ॥२॥
सा दृष्टिर्द्विविधा प्रोक्ता, नैसर्गी चोपदेशजा ।
केषाञ्चिन्मुक्तियोग्यानां, सा निसर्गाद्बुधैर्मता ॥३॥
केषाञ्चिदुपदेशात् सा, मतैव तत्त्वकोविदै ॥
तत्त्वज्ञप्त्युपमस्तस्मा–दुपदेशो भवान्तद ॥४॥ '

स एव यथावस्थिततत्त्वावबोध परमतनिराकरणपूर्वकस्वमतव्यवस्थापनरूपपरीक्षयैव सम्भवति॥ विबुधजनमान्या सा परीक्षा च ज्ञानपरोक्षज्ञप्तिवादिभाट्टाना स्वसमानाधिकरणस्वानन्तरसमयसमुत्पदिष्णुमानसेन ज्ञानज्ञानविदा योगानामचेतनज्ञानवादिसाङ्ख्यानाञ्च लोकालोकवर्त्तिद्रव्यपर्यायात्मकानेकपदार्थसार्थनिलोपकब्रह्माद्वैतवादिना शून्यवादिसौगतानाञ्च निर्विकल्पकप्रत्यक्षप्रमाणत्ववादिनां ताथागतानां स्वलक्षणावगाहित्वा-

न्निर्विकल्पकस्यैव प्रमाणत्वमिति मन्यमानानां चार्वाकाणाञ्च कदाग्रहग्रह निग्रहीतु संशयविपर्ययानध्यवसायानां स्वसमयप्रसिद्धदर्शनस्य च प्रामाण्यमपाकर्त्तुं गृहीतस्वपरव्यवसायिविशेषणज्ञानरूपप्रमाणाद्भवति ॥ अतस्तदेवादौ निरूप्यते। तत्प्रमाण द्विविधम्, प्रत्यक्ष परोक्षञ्चेति। तत्रादिम द्विविधम्, सांव्यवहारिकपारमार्थिकभेदात्। उदीचीनञ्च स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदात् पञ्चधेति। ननुप्रत्यक्षमेकमेव प्रमाणमिति चार्वाकैरभिहितत्वात् तदेवानुमानसहित द्विविधमेवेति बौद्धवैशेषिकसम्मतत्वादेतद्द्विविधमप्यागमेन सह त्रिविधमेवेति कपिलोक्तत्वादेतत्त्रितयमप्युपमानेन सहित चतुर्विधमित्यक्षपादोक्तेस्तदेतच्चतुष्कमप्यर्थापत्त्या सह पञ्चधेति प्रभाकरप्रतिपादनात् पञ्चापि तान्यनुपलब्ध्या सह षडेवेति भट्टवेदान्तिनोरुक्तेश्चैव सम्भवैतिह्यप्रतिभादिस्वभावानां प्रभूतानामपि सत्त्वात्, तथा चाभ्यधिष्महि–

"प्रत्यक्ष मानमेकन्तु, चार्वाकैरभिधीयते।
अनुमानेन युक्तन्तद्, द्विधा बौद्धैर्विवेचितम् ॥१॥
तदेव द्विविधं प्रोक्तम्, कणभक्षानुयायिभिः।
आगमेनान्वित तत्तु, त्रिधा कपिलसम्मतम् ॥२॥
त्रितयन्तूपमानेना–न्वित मान चतुर्विधम्।
अक्षपादेन तत्प्रोक्तम्, स्वमतालम्बिन प्रति ॥३॥

अर्थापत्त्या सहैतच्च, पञ्चधाऽऽह प्रभाकर।
पञ्चाप्यनुपलब्ध्या षट्, तान्याहुर्भट्टसूनव ॥ ४ ॥
षड्वै वेदान्तिनोऽप्याहु, सम्भवाद्यानि चापरे।
प्रभूतानामपीहेत्थम्, प्रतिपत्तिरनेकधा ॥५॥"

इति। तत्कथमेव सङ्गच्छते यद्द्विविध प्रमाणमितीति चेत्, तन्न, अनुमानस्य परोक्षरूपप्रमाणत्वसमर्थनेन प्रत्यभिज्ञादीना प्रमाणत्वसत्वेनोपमानादीनां प्रत्यभिज्ञादिष्वन्तर्भावेन च चार्वाकाद्यभिहितानामुन्मत्तप्रलपितप्रायत्वात्। ननु प्रत्यक्षस्येन्द्रियजन्यत्वाविशेषे कथ द्विभेद इति चेत्, स्पष्टताजीवातुकस्य तस्येन्द्रियमात्रजन्यत्वस्यासिद्धे, साव्यवहारिकप्रत्यक्षस्य बाह्यसापेक्षत्वात् पारमार्थिकस्य चात्मसापेक्षत्वादिति। साव्यवहारिकमपीन्द्रियनिबन्धनमनिन्द्रियनिबन्धन चेति द्विभेदम्। इन्द्रियाण्येव स्पर्शनादीनि पञ्च करणानि वस्तु प्राप्याप्राप्य च यज्ज्ञान जनयन्ति तदिन्द्रियनिबन्धनम्। मन एवासाधारण कारण यस्मिस्तदनिन्द्रियनिबन्धनम्। न च सर्वेष्वपि प्रत्यक्षेषु मनो व्याप्रियत एवेति कथ तद्द्विविधमिति वाच्यम्। करणभेदेन तद्भेदात्, तथाहि यदसाधारण कारण तदेव करणमिति नियमात् स्वप्नावस्थाया बाह्येन्द्रियव्यापारनिगमाद्बाह्यप्रत्यक्षाभावेन बाह्यप्रत्यक्ष इन्द्रियाण्येवासाधारणानि कारणानीति ता-

न्येव करणानि न मन इति। किञ्चासङ्गिप्रत्यक्षे व्यभिचारेण सर्वप्रत्यक्षेषु मनसो व्याप्रियमाणत्वस्यासिद्धेः। ननु वस्तु प्राप्याप्राप्येति कथम्, सर्वेषामप्यक्षाणां सम्बद्धवस्तुग्राहित्वेन प्राप्यकारित्वात्, यदवादि "सम्बद्धं वर्त्तमानं हि गृह्यते चक्षुरादिना" इति चेत्, न स्पर्शनरसनघ्राणश्रोत्राणां यथायथं बद्धस्पृष्टादिवस्तुग्राहकत्वेन प्राप्यकारित्वात् चक्षुर्मनसोस्तद्विपरीतत्वेनाप्राप्यकारित्वादिति। अत्राहुर्बौद्धाः-श्रोत्रस्याप्यप्राप्यकारित्वाच्चतुर्णां प्राप्यकारित्वमसिद्धम्। तथा हि-यद्यद्दिग्देशव्यपदेशकारि तत्तदप्राप्यकारि, यथा लोचनम्। अप्राप्यकारित्वव्याप्यदिग्देशव्यपदेशकारित्ववच्छ्रोत्रम्। यन्न दिग्देशव्यपदेशकारि तन्नाप्राप्यकारि, यथा रसना। दिग्देशव्यपदेशकारि चेदम्। इत्यन्वयव्यतिरेकाभ्यामुदाहरणोपनयाभ्यामवयवाभ्यामप्राप्यकारित्वं श्रोत्रस्य। न च दिग्देशव्यपदेशकारित्वस्यासिद्धिः, प्राच्यादिदिक्स्थितपुरुषोच्चारितशब्दे प्राच्यादित आगतोऽयमिति प्रतीतेः। इति चेन्मैवम्। गन्धस्पर्शयोरपि तथाप्रतीतत्वाद्घ्राणस्पर्शनयोरप्यप्राप्यकारित्वप्रसक्तेः। न च तत्तद्गन्धस्पर्शादीनामनुमानतः कारणान्यवगम्य तथाप्रतीतिः, शब्देऽप्येवं वक्तुं शक्यत्वात्। किञ्च श्रोत्रस्य दिग्देशविषयकत्वमपि न युक्तियुक्तम्, शब्दस्यैव श्रोत्रविषयत्वात्, "श्रोत्रविषयाः शब्दाः" इति वचनात्,

अन्यथा तेषामपि शब्दत्वप्रसङ्ग । किञ्चेन्द्रियाणां रूपिद्रव्यग्राहकत्वात् दिग्देशस्य चाकाशभागरूपस्यारूपित्वेन नेन्द्रियग्राह्यत्वमिति श्रोत्रेण तद्ग्रहणायोग । शब्दस्य तु यथा रूपिद्रव्यत्व तथा समनन्तरमेव वक्ष्यते विस्तरेण। ननु यथा स्पर्शनादीना प्राप्यकारित्वेन चन्दनाग्निकृताव-नुग्रहोपघातौ भवत , तथा श्रोत्रस्यापि शब्दकृतौ तौ स्याताभिति चेत्, सत्यम्, भवत एवानुग्रहोपघातौ पाटववाधिर्यलक्षणौ श्रोत्रस्यापि। तदुक्त मलयगिरिपूज्यैरावश्यकवृत्तौ नन्दीवृत्तौ च, "दृश्यते हि सद्योजातबालकाना कर्णदेशाभ्यर्णे गाढास्फालितझल्लरीझात्कारश्रवणस्फोट " इत्यादि, अत एव भगवतस्तीर्थकरस्य जन्ममहोत्सवावसरे दिक्कुमारिका एत्यायोजन सवर्तकेन मेदिनीशुद्धिप्रभृतिक चन्दनरक्षापोट्टलिकापर्यवसान सर्वं स्वकृत्य कृत्वा भगवत कर्णपाटवनिमित्त पाषाणद्वय गृहीत्वा वादयन्ति, तथा चोक्तमावश्यकटीकाया भवविरहसूरिभि , "[१]भगवतो तित्थगरस्स कण्णमूलसि दुवे पाहाणवट्टते टिटियावति" इति । यदि च श्रोत्रस्याप्राप्यकारित्वमेव, तदानुकूलवायुके शब्दे किं दूरतोऽपि बुद्धिरन्यथा निकटेऽपि सा न। न च पटुघटितद्वारे कथ शब्दबुद्धिस्तत शब्दस्यानागतेरिति वाच्यम्। यथा गन्धबुद्धिस्तत्र तथा त-

१ भगवतस्तीर्थकरस्य कर्णमूले द्वौ पाषाणगोलकौ वादयन्ति ।

स्या अपि सिद्धेः॥ वस्तुतस्तु द्रव्यशब्दस्य जीवपरिगृहीतभाषायोग्यपुद्गलसमूहत्वेन भावशब्दस्य च बहिर्निर्गतनिर्गच्छद्भाषापरिणामपरिणतभाषावर्गणापरमाणुसमूहत्वेन सूक्ष्मत्वात् कपाटादिनाऽप्रतिबद्धस्य बहिरागमनत एव बुद्धिः। तथैव प्रज्ञप्त्याख्यपञ्चमाङ्गे द्वितीयशतकपष्ठोद्देशके प्रज्ञापनायां चैकादशभाषापदे आवश्यकसूत्रस्पर्शिकनिर्युक्तिटीकायां च प्रतिपादितम्। एवञ्च श्रोत्रस्य सिद्ध प्राप्यकारित्वम्। प्रतिपादिता च श्रोत्रस्य प्राप्यकारितार्थान्तरव्याजेन प्रज्ञप्त्याख्यपञ्चमाङ्गे पञ्चमशते चतुर्थोद्देशके। "[1]छउमत्थे ण मणूसे आउडिज्जमाणाइं सद्दाइं सुणेइ त जहा सखसद्दाणि वा जाव झुसिराणि वा ताइं भंते किं पुट्ठाइं सुणेइ अपुट्ठाइं सुणेइ। गोयमा। पुट्ठाइं सुणेइ नो अपुट्ठाइं" इत्यादि॥ तथा च भगवत्यां द्वितीयशतकचतुर्थोद्देशके प्रज्ञापनायाञ्च पञ्चदशेन्द्रियपदप्रथमोद्देशकेऽपि "पुट्ठपविट्ठत्ती"त्यादिना श्रोत्रादीनि चक्षूरहितानि स्पृष्टमर्थं प्रविष्टञ्च गृह्णन्तीत्यादि निगदितम्। अत एव च "शब्दोऽपि स्वपरिणाममजहद् द्वादशयोजनप्रमितात् प्रदेशादागत. श्रोत्रेण प्राप्यकारिणोत्कर्षाद् गृह्यते" इत्याद्यावश्यकटीकायां

१ छद्मस्थो मनुष्य आकुट्यमानान् शब्दान् शृणोति तद्यथा शङ्खशब्दान्वा शुषिराणि वा तानि भदन्त किं स्पृष्टानि शृणोति अस्पृष्टानि शृणोति। गौतम। स्पृष्टानि शृणोति नो अस्पृष्टानि।

हरिभद्रसूरिभि' प्रोक्त सद्गच्छते॥ इत्थश्च श्रोत्रस्य प्राप्यकारित्वेन तस्य व्यञ्जनावग्रहो न चक्षुर्मनसोरित्यप्युपपद्यते। तथा चोक्त चतुश्चत्वारिंशदुत्तरचतुर्दशशतग्रन्थसूत्रणसूत्रधारै श्रीमद्धरिभद्रसूरिभिः शिष्यहिताख्यायामावश्यकटीकायां "शब्दादिपरिणतद्रव्याणा व्यञ्जनानामवग्रहो व्यञ्जनावग्रह इति अयश्च नयनमनोवर्जेन्द्रियाणामवसेय इति, न तु नयनमनसो' अप्राप्तकारित्वादिति"॥ एतेन श्री श्रमणसङ्घसमुद्रोत्कर्षेन्दुभि श्रीमद्यशोविजयवाचकपुङ्गवैरपि व्यञ्जनेन शब्दादिपरिणतद्रव्यनिकुरम्बेण व्यञ्जनस्य श्रोत्रेन्द्रियादेरवग्रह सम्बन्धो व्यञ्जनावग्रह इत्यादि ज्ञानबिन्द्वाख्यप्रकरणे व्यञ्जनावग्रहव्युत्पत्तिर्या प्रतिपादिता साऽपि सूपपादा। व्यक्तीकृतश्चैषोऽर्थ द्रव्यलोकप्रकाशे तृतीयसर्गे श्रीविनयविजयोपाध्यायै,

" प्राप्यार्थावच्छेदकत्वात्, श्रवणादीनि जानते।<br>
अङ्गुलासङ्ख्येयभागा–दपि शब्दादिमागतम् ॥१॥<br>
चतुर्णामत एवैषा, व्यञ्जनावग्रहो भवेत्।<br>
दृष्टान्तान्नव्यमृत्पात्र–शयितोद्बोधनात्मकात् ॥२॥<br>
यथा शरावक नव्य, नैवैकेनोदबिन्दुना ॥<br>
क्लिद्यते किन्तु भूयोभि , पतद्भिस्तैर्निरन्तरम् ॥३॥<br>
एव सुप्तोऽपि नैकेन, शब्देन प्रतिबुध्यते ॥<br>
किन्तु ते पञ्चषै कर्णे, शब्दद्रव्यैर्भृते सति॥४॥ इत्यादि,

अत एव च सामान्यावबोधात्मकस्य दर्शनस्य चक्षुर्दर्शनाचक्षुर्दर्शने इति भेदो सङ्गच्छेते। तथा हि बाह्येन्द्रियस्य चक्षुष एवाप्राप्तकारित्वात्तद्दर्शनमन्यन्नान्यस्य। ननु सामान्यत इन्द्रियानिन्द्रियजन्य सामान्यावबोधात्मक व्यावहारिकमेकमेव दर्शन स्यात् किं चक्षुर्दर्शनमचक्षुर्दर्शनमिति विभागेनेति चेत्, न, अवान्तरविशेषद्योतनेन शिष्यमतिव्युत्पत्तिफलत्वात्। न चैव सतीन्द्रियदर्शनमनिन्द्रियदर्शनमित्येव वाच्यम्, न तु चक्षुर्दर्शनमचक्षुर्दर्शनमिति, अन्यथान्येन्द्रियजान्यपि तानि चक्षुर्दर्शनमिव भेदमापद्येरन्निति वाच्यम्। वस्तूनां सामान्यविशेषोभयात्मकत्वात् तत्कीर्त्तनमपि सामान्यविशेषोभयरूपेणैवेतिशिष्टसमयपरिपालनाय चक्षुर्दर्शनमिति विशेषेणाचक्षुर्दर्शनमिति च सामान्येन दर्शननिर्देशात्। तथा चोक्त नवाङ्गीटीकाकर्तृभि· पूज्यपादश्रीमदभयदेवसूरिभि· प्रज्ञप्त्याख्यपञ्चमाङ्गस्य प्रथमशतकतृतीयोद्देशकटीकायाम्, " सामान्यविशेषात्मकत्वाद्वस्तुन· क्वचिद्विशेषतस्तन्निर्देश क्वचिच्च सामान्यतः, तत्र चक्षुर्दर्शनमिति विशेषतोऽचक्षुर्दर्शनमिति च सामान्यत· " इत्यादि। ननु श्रोत्रदर्शनमश्रोत्रदर्शनमित्यादिना प्रकारान्तरेणापि सामान्यविशेषाभ्यां तन्निर्देशसम्भव इति चेत्, सत्यम्। तथापि चक्षुषो-

ऽप्राप्यकारित्वप्रतिपत्तये चक्षुर्दर्शनमिति विशेषतस्तन्निर्देशादर । अन्येषान्त्वप्राप्यकारित्वाविशेषेणाचक्षुर्दर्शनमिति सामान्यतो निर्देश । मनसस्त्वप्राप्यकारित्वेऽपि तदपेक्षिण प्राप्यकारीन्द्रियस्य प्रभूतत्वात्तद्दर्शनस्याचक्षुर्दर्शन एवान्तर्भाव इत्यत सिद्ध श्रोत्रस्य प्राप्यकारित्वम्॥ तथा चावश्यकनिर्युक्तावप्युक्त पूज्यै "[१]पुट्ठ सुणेइ सद्द" इत्यादि॥

भणित च भाष्यकारेण जिनप्रवचनप्रदीपेन जिनभद्रगणिक्षमाश्रमणेन सयुक्तिकम्,

"[२]पांवति सद्दगन्धा, ताइ गतु सय न गिण्हन्ति॥"

इत्यादि ॥ सवादितश्चायमर्थो रत्नाकरावतारिकाया रत्नप्रभसूरिभि

" एवञ्च प्राप्य एवैष, शब्द श्रोत्रेण गृह्यते ।
श्रोत्रस्यापि तत सिद्धा, निर्बाधा प्राप्यकारिता ॥१॥"

अथेह योगा सङ्गिरन्ते, सुष्ठु श्रोत्रस्य प्राप्यकारित्व, किन्तु यदुदित शब्दस्य भाषावर्गणापरमाणुसमूहत्वेनेति, तन्न सहामहे ॥ तथा हि शब्दो

---

१ स्पृष्ट 'शृणोति शब्दम्', २ प्राप्नुत' (अन्यत आगत्य) शब्दगन्धौ ते, गत्वा स्वय (ते शब्दगन्धदेश शब्दगन्धौ) न गृह्णीत ॥ विशे० गा० २०६ ॥

गुणश्चक्षुर्ग्रहणायोग्यवहिरिन्द्रियग्राह्यजातिमत्त्वात्, यो यश्चक्षुर्ग्रहणायोग्यवहिरिन्द्रियग्राह्यजातिमान् स स गुण, यथा स्पर्श, चक्षुर्ग्रहणायोग्यवहिरिन्द्रियग्राह्यजातिमांश्चायम्, चक्षुर्ग्रहणायोग्यवहिरिन्द्रियग्राह्यजातिमत्त्वाद्गुणः, इति न्यायेन शब्दस्य गुणत्वसिद्धेरिति चेत्, न, अप्रयोजकत्वात्। अन्यथाऽऽकाशादिवदरूपित्वेनाऽऽत्मनोऽप्यचेतनत्वापत्ति'। न च शब्दस्य परमाणुसमूहत्वे घटादेरिव चाक्षुषस्पार्शनापत्तिरिति वाच्यम्। तस्य सूक्ष्मपरिणामपरिणतत्वेन चक्षुःस्पर्शनायोग्यत्वात्। न चैव श्रावणमपि माभूदिति वाच्यम्। अन्येन्द्रियगणाच्छ्रोत्रस्य प्राय पटुतरत्वेन भाषापरिणतानां सूक्ष्माणामपि तेषां तद्ग्रहणयोग्यत्वात्। तथोक्त भवविरहसूरिभि शिष्यहितायामावश्यकवृत्तौ "तस्य (शब्दस्य) सूक्ष्मत्वाद्भावुकत्वात् प्रचुरद्रव्यरूपत्वात् श्रोत्रस्य चान्येन्द्रियगणात् प्रायः पटुतरत्वात् स्पृष्टमात्रमेव शब्दद्रव्यनिवह गृह्णातीत्यादि"॥ भणितमिदमर्थत शब्दग्रहणप्रक्रियाप्रदर्शनद्वारा लोकप्रकाशे विनयविजयोपाध्यायैरपि,

"स्पर्शादिद्रव्यसङ्घाता–पेक्षया द्रव्यसहति ।
यद्वा सूक्ष्मासन्नशब्द–योग्यद्रव्याभिवासिका ॥११८

तन्निर्वृतीन्द्रियस्यान्त–र्गत्वोपकरणेन्द्रियम् ॥

स्पृष्ट्वापि सद्य' कुरुते–भिव्यक्तिं सा स्वगाचराम् ॥२॥

अन्येन्द्रियापेक्षया च, श्रवण पटुशक्तिकम् ॥

तत स्पृष्टानेव शब्दान्, गृह्णातीत्युचित जगु ॥३॥"

न च श्रोत्रेन्द्रिय द्रव्याग्राहक रूपस्पर्शाग्राहकबहिरिन्द्रियत्वाद्रसनावदित्यनेनार्थत शब्दस्य द्रव्यत्वे प्रतिक्षिप्ते क्रियात्वादेरसम्भवेन गुणत्वसिद्धिरिति साम्प्रतम्। शब्दो द्रव्य क्रियावत्त्वात् इत्यनुमानेन द्रव्यत्वसिद्धे, श्रोत्रसयोगेनैव तद्ग्रहात् पूर्वोक्तानुमानस्याप्रयोजकत्वात्, न च शब्दे क्रियावत्त्वासिद्धि , सहरणवायुवहनादिना तत्सिद्धे । तथा चोक्त तत्त्वार्थटीकाया सिद्धसेनगणिभि । "स चायाति श्रोत्रदेशमाशु पुद्गलमयत्वे सति सक्रियत्वात्, सक्रियत्व वायुनोह्यमानत्वाद् धूमस्येव, गृहादिषु पिण्डीभवनात्, विशेषतश्च द्वारानुविधानात् तोयवत्, प्रतिघाताच्च नितम्बादिषु वायुवत् " इत्यादि, आह च भाष्यसुधाम्भोनिधिर्भगवाञ्जिनभद्रगणिक्षमाश्रमणो गन्धशब्दयोर्घ्राणश्रवणदेशप्राप्त्या हेतुत्वप्रतिपादनमिषेण तयो पुद्गलमयत्वसाधनप्रसङ्गे ।

"ज' ते पोग्गलमइया, सक्किरिया वायुवहणाओ ।
धूमो व्व सहरणओ, दाराणुविहाणओ विसेसेण ॥
तोये व णितवाइसु, पडिघायाओ अ वाउव्वत्ति॥१॥"

उक्तश्चायमर्थो विनयविजयोपाध्यायैरपि,

"गन्धादिद्रव्यवद्वाता–नुकूल्येन प्रसर्पणात्"

इत्यादि। तथा च शब्द· क्रियावान् संहरणादिमत्वात् इत्याद्यनुमानतःप्रत्यक्षतोऽपि चागतोऽय शब्द इत्यादिना क्रियावत्त्वसिद्धे· । न च तत्प्रयोजकवायुसहरणान्नोक्तप्रक्रिया सङ्गच्छत इति वाच्यम्, मृदङ्गध्वन्यादिषु वायोरनुपलम्भात्तत्प्रतिध्वनेरनुपपत्ते·, स्त्रीपुंनपुसकोच्चरितशब्दप्रतिध्वनिषु वैजात्यानुपपत्तेश्चेत्यादिक बहुतरमूहनीयम् तत्तु वक्ष्यत उत्तरत्र इहैव । न च वाय्वौपाधिक्येव शब्दे गतिरनुभूयमानेति वाच्यम् । आगतेयमिन्द्रनीलप्रभेत्यादिवत्तस्या औपाधिकीत्वासम्भवात् । किञ्च शब्दे क्रियानभ्युपगमे तस्य श्रावणमप्यनुपपन्न शब्दस्य तत्रानागते श्रोत्रस्य च शब्ददेशेऽगमनात् । तथा चोक्त महामहोपाध्यायन्यायविशारदन्यायाचार्यैर्भगवद्यशोविजयवाचकैस्स्वकृतन्यायालोके प्रथमप्रकाश आत्मविभुत्वखण्डने " अन्यथा

१ यत्तौ ( गन्धशब्दौ ) पुद्गलमयौ, सक्रियौ वायुवहनात् ॥ धूमवत्संहरणतः ( गृहादिषु पिण्डीभवनात् ) द्वारानुविधानतो विशेषेण ॥ तोयवत् नितम्बादिषु ( गिरिगुहादिषु ) प्रतिघातात् वायुवदिति ॥ विश० गा० २०६, २०७ ॥

(शब्दक्रियाभावे) श्रोत्रेण शब्दग्रहण न स्यात् तस्य शब्ददेशेऽगमनात् गमने वाऽवान्तरालवर्त्तिशब्दानामपि ग्रहणप्रसङ्गात् अनुवातप्रतिवाततिर्यग्वातेपु च प्रतिपत्त्यप्रतिपत्तीपत्प्रतिपत्तिभेदाभावप्रसङ्गाच्च तस्य तत्कृतोपकाराद्ययोगात्"। न च भेर्याद्यवच्छेदेन जनितेनाद्यशब्देन निमित्तपवनतारतम्यातारतम्ये कदम्बगोकलकवीचीतरङ्गन्यायेन जनितेष्वनुपरिपाटीत कर्णदेशप्राप्तेपु शब्देपु नानुपपत्ति श्रावणस्येति साम्प्रतम्। चापमुक्तवाणसमानजातीयै प्रतिक्षणप्रभवैरन्यैरेव लक्ष्यप्राप्तिरिति ब्रुवत शाक्यस्यापि प्रामाणिकत्वापत्ते। एतेन "आद्यशब्देन वहिर्देशादिगवच्छिन्नोऽन्य शब्दस्तेनैव शब्देन जन्यते तेन चापर एव क्रमेण श्रोत्रोत्पन्नो गृह्यते इत्यादि" तथा–

" वीचीतरङ्गन्यायेन, तदुत्पत्तिस्तु कीर्त्तिता ॥
कदम्बगोलकन्याया–दुत्पत्ति कस्यचिन्मते ॥१॥ "

इति विश्वनाथपञ्चाननवचो "भेर्यादिदेशमारभ्य द्वितीयादिशब्दा शब्दजा" इति तर्कसङ्ग्रहदीपिकाकारवचनमपि व्युदस्तम् ॥ वस्तुतस्तु शब्दस्य द्रव्यत्वे श्रोत्रसंयोगेनैव तद्ग्रहोत्पत्तावुक्तगौरवाङ्गीकारे प्रमाणाभाव। न च स एवाय वाण इत्यादि प्रत्यभिज्ञानाद् वाणादावेकत्वसिद्धि, स एवाय क इत्यादिरूपा

शब्देऽपि सा निराबाधैव । तथा च सुष्ठूक्तं श्रीमद्यशोविजयवाचकैः "स एवायं शब्दो यमुच्चैरवोचच्चैत्र इत्यत्रापि हि प्रत्यभिज्ञानमबाधितमेवेति ।" एतेन

"सोऽयं क इति बुद्धिस्तु, साजात्यमवलम्बते"

इति मुक्तावलीकारवचोऽप्यपास्तम्। न च तीव्रमन्दादिभेदेन शब्दभेद इति वक्तव्यम्। एकस्यैव शब्दस्य निकटदूरदूरतरे तीव्रमन्दमन्दतरपरिणते। तथा चोक्तं लोकप्रकाशे,

"शब्दादीनां पुद्‌गला ये, परतः स्युः समागताः ।
तथामन्दपरीणामा–स्ते जायन्ते स्वभावतः ॥१॥"

इति। ननु तीव्रत्वमन्दत्वयोर्विरुद्धयोरेकत्र निवेशोऽनुपपन्न इति चेत्। न। विरुद्धयो रक्तनीलरूपयोर्घट इवोपपत्तेः। न च तत्र भिन्नकालावच्छेदेन तयोर्वर्त्तनान्न विरोधः, प्रकृतेऽपि तथैवेति किं नाभ्युपगम्यते॥ किञ्चैकस्मिन्नपि पुरुषे पित्रपेक्षया पुत्रत्वस्य पुत्रापेक्षया पितृत्वस्य च दर्शनादनेकान्तवादे वस्तूनामनन्तधर्मात्मकत्वादेककालावच्छेदेनापि मन्दतीव्रशब्दापेक्षया तीव्रत्वमन्दत्ववृत्तिरविरुद्धैव ॥ वस्तुतस्तु यच्छब्दे नोक्तभेदस्तच्छब्दस्यैक्येन श्रोत्रप्राप्तेरभावाच्छ्रावणत्वाभावप्रसङ्गः॥

न च श्रोत्र चक्षुराद्यतिरिक्तमिन्द्रियम् इन्द्रियान्तरा-

ग्राह्यगुणग्राहकत्वादिति शब्दे गुणत्वसिद्धिः, हेतौ गुणपदप्रवेशस्याप्रयोजकत्वाद्गौरवकरत्वाच्च, शब्दोऽपौद्गलिक अतिनिविडप्रदेशप्रवेशनिर्गमयोरप्रतिघाताद् गन्धवत्, इत्यपौद्गलिकत्वसिद्धि ,इत्यप्यतितुच्छम्, श्रोत्रप्राप्यकारित्वस्थापनाया वस्तुतस्त्वित्यादिना समाहितत्वात्, आश्रय विना गुणाना गतेरशक्यत्वेन दृष्टान्तासिद्धे , साश्रयाणां गमने वा तदाश्रयेणैव व्यभिचाराच्च । तथाहि—वर्त्यमानजात्यकस्तूरिकादिगन्धद्रव्य हि पिहितद्वारापवरकस्यान्तर्विशति वहिश्च निर्याति न चापौद्गलिक, न चापवरकादौ सूक्ष्मरन्ध्रसम्भवान्नातिनिविडप्रदेशत्वमतो गन्धद्रव्यप्रवेशनिष्क्रमौ, कथमन्यथोद्घाटितद्वारावस्थायामिव न तदेकार्णवत्व सर्वथा नीरन्ध्रेऽपवरकादौ तु न प्रवेशनिर्गमयो सम्भव इति साम्प्रतम् । शब्देऽपि तुल्ययोगक्षेमत्वात् । न चाकाशादिवत् पूर्वं पश्चाच्चावयवानुपलब्धेरपौद्गलिकत्वसिद्धिरिति वाच्यम्, यद्यपि सूक्ष्मपरिणामपरिणताना तेषामर्मचक्षुषामव्ययवोपलब्धेरभावस्तथाप्यतिशायिज्ञानवतां तत्सम्भवेन साधनासिद्धे परमाण्वादिनोल्कादिनाऽनैकान्तिकत्वाच्च। न चापौद्गलिकत्वस्य पुद्गलसमवायिकारणकत्वाभाववत्त्वमित्यर्थे कथ परमाणौ व्यभिचार, द्व्यणुकादौ तदापत्ते । न च योग्यत्वनिवे-

शे सोऽपि कथम्, तथा सति त्रसरेणौ तु स निर्बाध एव। किञ्चावयवानुपलब्धेरित्यस्य स्वावयवानुपलब्धेरिति पर्यवसितत्वेनाकाशस्यावयवाभावेन तदुपलब्ध्यप्रसिद्ध्या तदभावस्यापि सुतरामसिद्धेर्दृष्टान्तासिद्धिः। ननु व्यतिरेकदृष्टान्तेन साधने कथं सेति चेत्, न, अप्रयोजकत्वात्। ननु निरुपाधिकत्वमेव प्रयोजकमस्त्विति चेत्, न, अमूर्त्तत्वस्यैव तत्त्वात्, तथा हि साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः, स च प्रकृतेऽपि अपौद्गलिकेषु आत्मादिषु सत्त्वात् साधनवत्सु शब्दोल्कादिषु चासत्त्वान्निराबाध एव। सूक्ष्ममूर्त्तान्तराप्रेरकत्वाच्छब्दस्य गन्धादिवदपौद्गलिकत्वसिद्धिरित्यप्यसाम्प्रतम्, अप्रयोजकत्वाद्धूमसूक्ष्मरजोगन्धद्रव्यादिभिर्व्यभिचाराच्च। नहि गन्धद्रव्यादिकमपि नासाया निविशमानं तद्विवरद्वारदेशोद्भिन्नश्मश्रुप्रेरकं दृश्यते। शब्दस्य गगनगुणत्वात् तत्सिद्धिरिति चेत्, न, गुणत्वासिद्ध्या शब्दो न गगनगुणः अस्मदादिप्रत्यक्षत्वाद्रूपवदित्याद्यनुमानेन च स्वरूपासिद्धेरप्रयोजकत्वाच्च। एतेन

"आकाशस्य तु विज्ञेयः, शब्दो वैशेषिको गुणः"

इति विश्वनाथभट्टाचार्यवचोऽप्यपास्तम्। स्पर्शशून्याश्रयत्वेन तत्सिद्धिरिति तु मन्दम्, शब्दाश्रयभू-

ताया भाषावर्गणायस्स्पर्शवत्त्वेन स्वरूपासिद्धेरनुकूल-तर्काभावाच्च । तथा च स्याद्वादमञ्जरीटीकाकारैर्मल्लिषेणसूरिभिरप्युक्तम्— "शब्दपर्यायस्याश्रयो भाषावर्गणा न पुनराकाश, तत्र च स्पर्शो निर्णीयत एव, यथा, शब्दाश्रय स्पर्शवाननुवातप्रतिवातयोर्विप्रकृष्टनिकटशरीरिणोपलभ्यमानानुपलभ्यमानेन्द्रियार्थत्वात् तथाविधगन्धद्रव्याधारद्रव्यपरमाणुवत्" इत्यादि। न च स्पर्शवत्त्वे तत्स्पर्शस्य स्पार्शनापत्ति, सिंहावलोकनन्यायेन विलोक्यतां तावत्तदाश्रयस्य सूक्ष्मपरिणामपरिणतत्वात् त्रसरेणोरिव स्पर्शनायोग्यत्वात् तत्स्पर्शस्याप्ययोग्यत्वेन तदुपपत्ते । अनुमया तु स्पर्शवत्त्व शब्दस्य सिद्धमेव। तथाहि। शब्द स्पर्शवान् स्वसम्बद्धार्थान्तराभिघातहेतुत्वाद्दण्डादिवत् । झल्लर्यादिध्वनिनिशेषाभिसम्बन्धेन श्रोत्राभिघात प्रतीत एव तज्जन्यबाधिर्याद्युपलम्भेन। स्पर्शशून्यत्वे च शब्दस्य कालाकाशाभिसम्बन्धवच्छब्दाभिसम्बन्धेपिनासावुपलभ्येत। शब्दसहचरितेन पवनेनैवाभिघात इति तु न। अन्वयव्यतिरेकाभ्यां शब्दाभिसम्बन्धस्यैव तद्धेतुत्वसिद्धे । अतो पि तस्य द्रव्यत्वसिद्धि । शब्दस्य स्पर्शवत्त्वे तदाश्रयस्य तद्वत्त्व सुतरां स्थितमेव ॥ किञ्च किमिदमाश्रयत्व सयोगेन तादात्म्येन वा, आद्ये गगनसयुक्तघटादौ व्यभिचार ।

ननु वृत्त्यनियामकसम्बन्धेनाश्रयत्वस्यास्वीकारात् कथ व्यभिचार इति चेत्, तथा सति हेत्वसिद्धिरेव । अन्यत्वे च भेदाभेदाङ्गीकारे स्याद्वादापत्तिः। न च समवायेनेति कथं तदापत्तिः, भिन्नाभिन्नेत्यादिविकल्पतस्तदनुपपत्तेस्तदङ्गीकारे प्रमाणाभावात् । किञ्च गगनाश्रयत्वेन शब्दस्य गुणत्वे सर्वस्य सर्वशब्दग्रहणापत्तिस्सन्निकर्षाविशेषात्, न च कर्णशष्कुल्यवच्छेदेनोत्पन्नो गृह्यते इति साम्प्रतम्, अवच्छेद्यस्याऽऽकाशत्वेनाविशेषात्, तदन्यत्वे शब्दस्य तत्रासमवायादनायासादेव द्रव्यत्वसिद्धिः । न च तत्तत्पुरुषीयादिघटितभिन्नभिन्नसन्निकर्षाभ्युपगमेन न साऽऽपत्तिरिति साम्प्रतम्, द्रव्यत्वे संयोगेनैवोपपत्तौ तादृशमहागौरवाङ्गीकारे प्रमाणाभावात् । एतेन "शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः कारणम्" इतिवचोऽप्यवगणितम् । ननु शब्दो विभुद्रव्य मूर्त्तं वा, आद्ये सर्वेषामपि ग्रहणापत्ति, मूर्त्तद्रव्यत्वे च मूर्त्तद्रव्यप्रत्यक्ष प्रत्युद्भूतरूपस्य कारणत्वान्न तच्छ्रावणमिति चेत्, न, मूर्त्तद्रव्यप्रत्यक्ष प्रति योग्यताविशेषस्यैव हेतुत्वात्। तथा चोक्तम्–

भव्यजनमनोमयूरवारिदे श्रीमद्यशोविजयवाचकै ॥

"द्रव्यप्रत्यक्षत्वावच्छिन्न प्रति योग्यताविशेषस्यैव हेतुत्वात् । स च व्यावृत्तिविशेष शक्तिविशेषो वा "

इत्यादि। अत एव "तस्माद्य शब्दो य प्रति योग्यः स तेन गृह्यते नान्य" इति तत्त्वचिन्तामणिवचोऽपि सङ्गच्छते ॥ किञ्च महत्त्वाल्पत्वपरिमाणवत्त्वाच्छब्दस्य द्रव्यत्वम्। न च शब्देयत्ताया अप्रत्यक्षत्वेन तत्परिमाणासिद्धि, वायाविव शब्दे तस्याप्रयोजकत्वात्। वस्तुतस्तु तस्य सूक्ष्मपरिणामपरिणतत्वेनास्मदादीनां प्रत्यक्षासम्भवेऽपि विश्ववेदिनां तत्सिद्धे। न च तीव्रत्वमन्दत्वाभ्या तदुपपत्ति, शब्दगुणत्वासिद्धया तयोर्गुणगतजातिरनासिद्धे, तीव्रत्वमन्दत्वाभ्या महत्त्वाल्पत्वप्रत्यये च तीव्रवाहिन्या गिरिसरितो महत्त्वस्य मन्दवाहिन्या गङ्गायाश्चाल्पत्वस्य प्रसक्ते। न च कारणगतमहत्त्वाल्पत्वप्रत्यय, तथा सति भवन्मते तत्समवायिकारणस्याकाशस्य परममहत्त्वेन सर्वेषामपि तथाधीप्रसङ्ग, मूर्त्तकारणगताल्पत्वमहत्त्वप्रत्ययेऽप्यन्यत्र तथापत्तिश्च। किञ्च एकत्वादिसङ्ख्यावत्त्वादपि शब्दस्य द्रव्यत्वम्। न च गगनगतसङ्ख्योपचार, नियमादेकत्वप्रसक्ते। वाय्वादिकारणगतसङ्ख्यासम्बन्धित्वमपि न युक्तियुक्तम्, बहुत्वस्यैव सर्वदा भानप्रसङ्गात्, यथा यथासङ्ख्याप्रतीतिस्तथा तथा कारणगतसङ्ख्योपचार इत्यपि न युक्तम्, शब्दस्य द्रव्यत्वेन स्वय सङ्ख्यावत्त्वात् तथोपचारे मानाभावादन्यत्रापि तथापत्तेश्च।

अत्राहुरुच्छृङ्खलनैयायिका, शब्दस्य गगनाश्रयत्वे सङ्ख्याविरोधादिदोषाद्वायुगुण एव शब्द.॥ तथाहि शब्दो वायुगुण. तन्नाशादेव तन्नाशात् वायुस्पर्शवदिति चेत्, मैवं, पूर्वोक्तयुक्त्या गुणत्वासिद्धया वायुगुणत्वस्यापि सुतरामसिद्धे., वायोः सत्वेऽप्यनुपलभ्यमानत्वेन स्वरूपासिद्धेः, एजनादिनाऽनैकान्तिकत्वाच्च । अपि च पवनगुणत्वे तत्स्पर्शस्येव स्पार्शनप्रसङ्ग । ननु रसरूपादीनामिव शब्दस्य स्पार्शनप्रतिवन्धकत्वमिति चेत्, मानाभावात्, कल्पनागौरवाच्च, गुणचाक्षुषजनकतावच्छेदकजात्या सह साङ्कर्यात् गुणस्पार्शनजनकतावच्छेदकजातेरप्यसिद्धि., तथा चोक्त भविकपद्मविबोधनभास्करैर्न्यायविशारदैर्यशोविजयवाचकपुङ्गवै., "शब्दे गुणस्पार्शनजनकतावच्छेदकजात्यभावान्न दोष इति चेत्, न, तादृशजातेरसिद्धेर्गुणचाक्षुषजनकतावच्छेदिकया साङ्कर्यादिति दिग्" इत्यादि। तथा च न वायोर्गुण. शब्द । तथैवोक्त मुक्तावलीकारेण विश्वनाथपञ्चाननेनापि " न च सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यम् । अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात् " इत्यादि ॥ किञ्च मूर्तत्वादेव नाकाशगुण शब्दः, यो हि यद्गुण. स तत्समानधर्मा, यथा ज्ञानमात्मन , तथाह्य-

मूर्त्त आत्मा ततस्तद्गुणो ज्ञानमप्यमूर्त्तमेवेति, एवं शब्दोऽपि यद्याकाशगुणस्तर्हि तस्यामूर्त्तत्वाच्छब्दस्यापि तद्गुणत्वेनामूर्त्तताप्रसङ्ग, तथा च भणित शीलाङ्काचार्यपादै सूत्रकृताख्यद्वितीयाङ्गवृत्तौ "शब्दश्चाकाशस्य गुण एव न भवति तस्य पौद्गलिकत्वादाकाशस्य चामूर्त्तत्वात्" इत्यादि। न चेद नीतिसङ्गतम्, अमूर्त्तत्वलक्षणायोगात्। तथाहि मूर्त्तिविरहो ह्यमूर्त्तता। नन्वभीष्टमेव तस्यामूर्त्तत्वमिति चेत्, न, तत्र शब्दे स्पर्शवत्त्वेन मूर्त्ततायास्सिद्धत्वात्। तथाहि स्पर्शवन्तः शब्दा तत्सम्पर्के उपघातदर्शनाल्लोष्टुवत्, न चात्रासिद्धिदोषदुष्टो हेतु, यतस्तत्कालजन्मिनो बालस्य कर्णस्थानसन्निधौ गाढास्फालितझल्लर्यादिध्वनिभि श्रोत्रस्फोटो दृश्यते, तथा चोक्तमावश्यकवृत्तौ मलयगिरिपूज्यै "दृश्यते हि सद्योजातबालकाना कर्णदेशाभ्यर्ण गाढास्फालितझल्लरीझणत्कारश्रवणत श्रवणस्फोट" इत्यादि, न चेत्थ श्रवणस्फोटादिरूपोपघातकृत्त्वमस्पर्शवत्त्वे सति सम्भवति यथा नभस, ततो विपक्षाद्वृत्तित्वात् न व्यभिचारित्वमपि हेतो। एवञ्चाभिघातादिनापि स्पर्शवत्त्व शब्दस्य। तथा हि, शब्दाः स्पर्शवन्त अभिघाते गिरिगह्वरादिषु शब्दोत्थानात् उपलखण्डवत्, वादिप्रतिवादिनोरुभयोरपि सिद्धोऽय

हेतु, तथा हि अतिप्रयासशब्दितशब्दाभिघातादिना गिरिगह्वरादिषु प्रतिदिश प्रसरन्तः शब्दा सञ्जायमाना' शृणुमो वयम्, तत. स्पर्शवत्त्वान्मूर्त्ता एवेति सिद्धम्, "रूपस्पर्शादिसन्निवेशो मूर्त्ति, इति वचनात्॥ रूपस्पर्शादिसन्निवेशो ह्युपपत्तितः वक्ष्याम्यनन्तरमिहैव॥ किञ्चाकाशमेकमनेक वा, यद्याद्यः पक्ष., तर्हि लक्षयोजनतोऽपि शब्दश्रवणं स्यात्, आकाशस्यैकत्वाच्छब्दस्य च तद्गुणत्वान्निकटदूरादिभेदाभावात् ॥ यदोदीचीनो विकल्प., तदा तु वदनदेशस्थितशब्दस्यान्यनभोवर्त्तिनः श्रोतु. कथं श्रवण, वदनदेशाकाशगुणतया शब्दस्य श्रोतृगतश्रोत्रेन्द्रियाकाशसम्बन्धाभावात्, अतोऽपि न युक्तिमच्छब्दस्याम्बरगुणत्वम् ॥ नन्वाकाशगुणत्वानभ्युपगमे शब्दस्य स्थितिरेव नोपपद्यते, पदार्थमात्रेण चावश्यमेव स्थितिमता भवितव्यम्, तत्र रूपरसगन्धस्पर्शानां पृथिव्यादिभूतचतुष्टयमेवाश्रयः, शब्दस्य तु तदाश्रयत्वानुपपत्त्या आकाशाश्रयत्व सिद्ध्यति, ततश्चाम्बरगुण शब्द इति । तदप्यचारु, एवं सति पृथिव्यप्तेजोवाय्वादिसर्वद्रव्याणामप्याकाशाश्रयत्वेन तद्गुणत्वप्रसङ्ग. । तथा च सति आकाशद्रव्याद्वैतवादः समजनि नव्य. । नचाश्रयणमात्र न तद्गुणत्वप्रयोजक किन्तु समवाय. स चास्ति ध्वनेरम्बरे

सम्बन्धो न तु क्षित्यादीनां तथा । ननु कोऽयं समवाय. । परस्परमेकीभावेनावस्थान यथा पृथ्वीजलादिभिः सह रूपरसादीनामिति चेत्, न, शब्दस्याम्बरगुणत्वासिद्ध्या तेन सह ध्वनेर्लोलीभावेनावस्थानाप्रतीते । किञ्च समवायस्य सम्बन्धत्वमप्यनुपपन्नमित्यादि सिंहावलोकनेन विलोक्यताम्। अथाकाश उपलभ्यमानत्वात्तद्गुणता शब्दस्येत्यप्यपरिपेशलम् । एव सति अर्कतुलकादीनामम्बर उपलभ्यमानत्वात् तद्गुणत्वप्रसक्ति.। अथार्कतूलकादीना परमार्थतो भूम्यादिस्थानमाकाशे तूपलम्भो वायुना सञ्चार्यमाणत्वात्, यद्येव तर्हि शब्दस्यापि परमार्थत स्थान श्रोत्रादि यत्पुनराकाशेऽनस्थानोपलम्भस्तद्वायुना सञ्चार्यमाणत्वात्, तथाहि यतो यतो वायु सञ्चरति ततस्तत, शब्दोऽपि गच्छति ॥ उक्तञ्च प्रज्ञाकरगुप्तेन॥

यथा च प्रेर्यते तूल–माकाशे मातरिश्वना ॥
तथा शब्दोऽपि किं वायो, प्रतीप कोऽपि शब्दवित्॥१॥

न च तथापि श्रोत्रग्राह्यत्वेन तदाश्रितत्वाच्छब्दस्य श्रोत्रस्य चाकाशरूपत्वात् तद्गुण शब्द इति साम्प्रतम्। श्रोत्रस्य गगनात्मकत्वे गगनस्य सर्वत्राविशेषाद्बाधिर्याद्यभावप्रसङ्गात्। एतेन "आकाश एक एव सन्नपि उपाधे कर्णशष्कुलीभेदाद्भिन्न श्रोत्रात्मक

भवति" इति सिद्धान्तमुक्तावलीकृद्वच कर्णशष्कुलीवि-
वरावच्छिन्नेश्वरस्यैव श्रोत्रत्वम्" इति शिरोमणिकृन्मत
चापहस्तितम् । न चाकाशस्यान्यथानुपपत्त्या तद्गु-
णत्वकल्पन, तथाहि शब्दो द्रव्यसमवेतो गुणत्वात् स-
योगवत्, इति द्रव्यसमवेतत्वे सिद्धे शब्दो न स्पर्शवद्द्र-
व्यसमवेत:, न दिक्कालमन.समवेत, नात्मसमवेत, अ-
ग्निसयोगासमवायिकारणकत्वाभावे, सत्यकारणगुण-
पूर्वकप्रत्यक्षत्वात् सुखवत्, विशेषगुणत्वाद्रूपवत्, बहि-
रिन्द्रियग्राह्यत्वात् स्पर्शवदिति अनन्यसमवेतत्वाच्छब्द-
स्य गगनसमवेतत्व परिशेषानुमानेन कल्प्यत इति
वाच्यम् । प्रथमतृतीययोर्गुणत्वासिद्ध्या स्वरूपासिद्धे-
र्द्वितीयतुर्ययोश्चाप्रयोजकत्वात् । एतेन शब्दाधिकरण
नवम द्रव्यं गगननामक सिद्ध्यतीति वचश्शब्दगुण-
कमाकाशमिति वचश्चाप्यपास्तम् । ननु तर्हि आकाशे
प्रत्यक्षत्वप्रयोजकोद्भूतरूपाभावात् प्रत्यक्षत्वासम्भवेन
किं मानमिति चेत्, अनुमानमेव, तथाहि द्रव्याणि
साश्रयाणि द्रव्यत्ववत्त्वादित्यादि, न च भूतलादीनां
घटाद्याधारत्वेनैवोपपत्तावलमन्यगवेषणयेति वाच्यम् ।
अदृश्यमानपरमाण्वाद्याधारतयैकस्यैव तस्य सिद्धेः ।
तथा चोक्त प्रज्ञप्तिपञ्चमाङ्गे त्रयोदशशतकचतुर्थोद्देश-
के " आगासत्थिकाएण भंते जीवाणं अजीवाण य

किं पन्नत्ति, गोयमा, आगासत्थिकाएण जीवदव्वाण य अजीवदव्वाण य भायणभूए, एगेण वि से पुण्णे, दोहिं वि पुण्णे, सय पि माएज्जा, कोडिसएण वि पुण्णे, कोडिसहस्स पि माएज्जा, अवगाहणालक्खणेण आगासत्थिकाए" इत्यादि, अयमस्यालापकस्यार्थ, भगवान् गौतमस्वामी श्रुतकेवली चतुर्दशपूर्वविद्द्वादशाङ्गप्रणेता सर्वाक्षरसन्निपाती तीर्थंकरभावित मातृकापदश्रवणमात्रावाप्तप्रकृष्टश्रुतज्ञानावरणक्षयोपशमो विवक्षितार्थपरिज्ञानसमन्वितोऽपि स्ववचसि शिष्यप्रत्यायनार्थं गणधरप्रश्नतीर्थकरनिर्वचनरूपत्वात् सूत्रस्येति सूत्रणार्थं,

नहि नामानाभोग—श्छद्मस्थस्येह कस्यचिन्नास्ति ॥
ज्ञानावरणीय हि, ज्ञानावरणप्रकृतिकर्म ॥१॥

इति न्यायाच्छद्मस्थस्यापि स्वस्यानाभोगसम्भवाद्वा भगवते श्रीमते महावीरस्वामिने काश्यपाय ज्ञातसूनवे केवलालोकवलावलोकितलोकालोकार्थभावाय परमर्षये पप्रच्छ, आकाशास्तिकाय आङिति मर्यादया स्वस्वभावापरित्यागरूपतया काशन्ते स्वरूपेणावभासन्ते यस्मिन् व्यवस्थिता पदार्थाः तदाकाश, यदा त्वभिविधावाङ्, तदा आङिति सर्वभावाभिव्याप्त्या काशते इत्याकाशम्, अस्तय प्रदेशा , तेषां काय सङ्घातः " गणकाए य निकाये खधे वग्गे तहेव रासीय "

१ गुण. कायश्च निकाय स्कन्धो वर्गस्तथैव राशिश्च ।

इति वचनात् अस्तिकाय प्रदेशसङ्घात इत्यर्थः, आकाशश्च तदस्तिकायश्चाकाशास्तिकायस्तेनाकाशास्तिकायेन, भदन्त इति परमगुर्वामन्त्रण, जीवन्ति प्राणान्धारयन्तीति जीवास्तेषां जीवानां, जीवाश्चेतनावन्तस्तद्विपरीता अजीवास्तेषामजीवानां, चः समुच्चये, किमिति स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मेण धर्मिज्ञानविषयिणीच्छा किमोऽर्थ, प्रवर्त्तते, भगवानाह–'गोयमा' इति कोमलामन्त्रणे गौतम, आकाशास्तिकायः जीवद्रव्याणां चाजीवद्रव्याणां च भाजनभूत, अनेन इदमुक्त भवति सत्यस्मिञ्जीवादीनामवगाहः प्रवर्त्तते एतस्यैव प्रश्नितत्वादिति, भाजनभावमेवास्य दर्शयन्नाह–'एगेण वि' इत्यादि, एकेन परमाण्वादिना, 'सेत्ति' असौ आकाशास्तिकायप्रदेश इति गम्यते, पूर्णो भृत, तथा द्वाभ्यामपि ताभ्यामसौ पूर्ण, शतमपि मायादेकस्मिन्प्रदेशे, कोटिशतेनापि पूर्णोऽसावस्ति, एव कोटिशतसहस्रमपि मायात्। ननु कथमेतदुच्यते यत्र एकोऽणुर्माति तत्र द्वौ शत सहस्राण्यपि मायादिति चेत्, न, पुद्गलानां परिणामस्य विचित्रत्वात्, यथाऽपवरकाकाशमेकप्रदीपप्रभापटलेनापि पूर्यते द्वितीयमपि प्रभापटल तत्र माति यावच्छतमपि तेषां तत्र माति। ननु मूर्त्तयोः समानदेशविरुद्धत्वमिति न्यायात् एकत्र

प्रदेशे द्वयोरणोर्वृत्तिरेव विरुद्ध्यते, तथा च कथमेकं द्वाभ्यां पूर्ण इत्यादीति चेत्, न, निहितोत्तरत्वात्, अत एव च तन्न्यायस्याप्रामाण्यं, कथमन्यथा तत्प्रामाण्यमङ्गीकुर्वतां योगानामवयविनि पाकः। न चावयविनाऽवष्टब्धेषु अवयवेषु पाको न सम्भवति, किन्तु वह्निसंयोगेनावयवेषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः, पुनश्च पक्वपरमाणुसंयोगाद् द्व्यणुकादिक्रमेण महावयविपर्यन्तमुत्पत्तिः, तेजसामतिशयितवेगवशात् पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति अतः सम्भाव्यते परमाणावेव पाक इति वाच्यम्, अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाकस्याविरुद्धत्वात्, न च मूर्त्तयोः समानदेशताविरोध इति वाच्यम्, अनन्तावयवितन्नाशकल्पने गौरवात्सोऽयं घट इति प्रत्यभिज्ञाप्रतीतेश्च न्यायस्याप्रामाणिकत्वात्। वस्तुतस्तु आकाशस्यावगाहस्वभावत्वान्न किञ्चिदपि विरुद्ध्यते, यथैकस्यापि परोपकारिण उपकार्यैकसद्भावे एकस्यैवोपकारकत्वं द्वयसत्त्वे द्वयोरपि शतसत्त्वे शतस्य सहस्रसत्त्वे सहस्रस्यापि, यथा वा एकस्मिन् पारदकर्षके मणिमन्त्रौषध्यादीनामचिन्त्यः प्रभाव इति न्यायात् औषधिविशेषप्रभावतः शतमपि स्वर्णकर्षकाणि मायात् न पुनर्मानावगाहनयोर्वृद्धि

प्रतिपक्षोपधिसद्भावे विपर्ययोऽपि स्यादतो न कश्चिद्दोष, विशेषार्थिना भगवतीवृत्तिरवलोकनीया। प्रतिपादितश्चाकाशास्तिकाय पूर्वसूरिभिरपि श्यामाचार्यैः प्रज्ञापनाप्रथमपदे " से किं तं अरूवीअजीवपन्नवणा, अरूवीअजीवपन्नवणा दसविहा पन्नत्ता, त जहा—धम्मत्थिकाए १ धम्मत्थिकायस्स देसे २ धम्मत्थिकायस्स पदेसा ३ एव अधम्मत्थिकाए १ अधम्मत्थिकायस्स देसे २ अधम्मत्थिकायस्स पदेसा ३ एव आगासत्थिकाए १ आगासत्थिकायस्स देसे २ आगासत्थिकायस्स पदेसा ३ अद्धासमए य"। तथा

"जीवानां पुद्गलानाञ्च, धर्माधर्म्मास्तिकाययो ।
बादराणां घटो यद्–दाकाशमवकाशदम् ॥१॥
धर्म्मादीनां वृत्ति–र्द्रव्याणां यत्र भवति तत्क्षेत्रम्।
तैर्द्रव्यैः सह लोक–स्तद्विपरीत ह्यलोकाख्यम् ॥२॥

इत्यादीनि पूर्वर्षिवचनान्यपि तत्सिद्धिप्रतिपादकानि। वस्तुतस्त्वस्मदादीनां योग्यताविशेषाभावात् त-

१ अथ का सा अरूप्यजीवप्रज्ञापना। अरूप्यजीवप्रज्ञापना दशविधा प्रज्ञप्ता, तद्यथा। धर्मास्तिकायः १ धर्मास्तिकायस्य देशः २ धर्मास्तिकायस्य प्रदेशा ३ अधर्मास्तिकाय ४ अधर्मास्तिकायस्य देश ५ अधर्मास्तिकायस्य प्रदेशा ६ आकाशास्तिकाय ७ आकाशास्तिकायस्य देशः ८ आकाशास्तिकायस्य प्रदेशा. ९ अद्धासमयश्च १०,

प्रत्यक्षाभावेऽपि सकलरूप्यरूपिद्रव्यपर्यायवेदिनां प्रत्यक्षादेव तत्सिद्धि । इत्थ चाकाश द्रव्यमेव नास्तीत्यभिदधता नव्यनैयायिकानां वचोऽप्यपास्तम् । ननु शब्दस्य परमाणुसमूहत्वे तत्र रूपादीनां घट इवापत्तिरिति चेत्, न, इष्टापत्ते, आश्रयस्य च सूक्ष्मत्वात्तदग्रह, तथा चोक्त भगवत्या त्रयोदशशतकसप्तमोद्देशके "रूवी भते भासा अरूवी भासा, गोयमा, रूवी भासा नो अरूवी भासत्ति" उक्तश्च वर्गणाना वर्णादिचिन्ताधिकारे कर्म्मप्रकृतिवृत्त्योर्मलयगिरियशोविजयवाचकाभ्यामपि "तैजसप्रायोग्याद्याश्च वर्गणा पञ्चवर्णा पञ्चरसा द्विगन्धाश्च ज्ञातव्या, स्पर्शचिन्तायान्तु चतु स्पर्शा"

इत्यादि। ननु शब्दस्य द्रव्यत्वे श्रोत्रस्य प्राप्यकारीन्द्रियत्वेन चन्दनाग्न्यादिकृतौ त्वचोऽनुग्रहोपघाताविवानुग्रहोपघातौ श्रोत्रस्य शब्दकृतौ स्यातामिति चेत्, दृश्यत एव श्रोत्रस्य शब्दकृतौ पाटववाधिर्यलक्षणावनुग्रहोपघातावित्यादि विस्तरेण श्रोत्रप्राप्यकारित्वव्यवस्थापनावसरे प्रागेव प्रतिपादित, तच्च मण्डूकप्लुत्या कुशाग्रीयया धियाऽवधार्यताम् । ननु शब्दस्य द्रव्यस-

१ रूपिणी भदन्त भापा अरूपिणी भापा । गौतम । रूपिणी भापा नो अरूपिणी भापेति ।

मूहत्ते आवश्यकसूत्रप्रत्याख्यानाध्ययने " देसावगासियस्स समणोवासएण इमे पञ्चइयारा जाणियव्वा ण समायरियव्वा त जहा आणवणप्पओगे पेसवणप्पओगे सद्दाणुव्वातेत्यादि—

" आणवणे पेसवणे सद्दे रूवे य पुग्गलक्खेवे ।
देसावगासियम्मि बीए सिक्खावए निंदे ॥१॥ "

इत्यादि श्रावकप्रतिक्रमणसूत्रे वन्दित्तुनाम्नि च श्रावकस्य द्वितीयदेशावकाशिकनामशिक्षाव्रतातिचारपञ्चके सामान्यात् पुद्गलप्रक्षेपातिचारात् शब्दाणुपातातिचारस्य पृथगुपादानमयुक्तम्, किञ्च—लेष्टुवादिप्रक्षेपाणामपि पृथक्पृथग्नामग्रहणेनातिचारबाहुल्यप्रसङ्ग इति चेत्, सत्यम्, तथापि शब्दानां पुद्गलसमूहत्वस्य लेष्टुवादीनामिव चाक्षुषस्पार्शनप्रत्यक्षाभावेन माभून्मुग्धजनानां तदनतिचारत्वारेकेति तदतिरिक्तग्रहणम् । वस्तुतस्तु पदार्थानां सामान्यविशेषोभयात्मकत्वात् क्वचित्सामान्यत क्वचिच्च विशेषतस्तन्नि-

२ देशावकाशिकस्य श्रमणोपासकेन इमे पञ्चातिचारा ज्ञातव्या न समाचरितव्या । तद्यथा । आनयनप्रयोग १ प्रेषणप्रयोगः २ शब्दाणुपात इत्यादि ।

आनयन प्रेषणं शब्दान् रूपाणि च पुद्गलक्षेपान्
देशावकाशिके द्वितीये शिक्षाव्रते निन्दामि ॥ १ ॥

देश इति शिष्टसमयात् सामान्यग्रहणे सत्यपि प्राधान्यख्यापनार्थं भेदेनोपन्यास इति न्यायाच्च, यथा ब्राह्मणा आयाता वशिष्ठोऽप्यायात, तथा पुद्गलप्रक्षेप इति सामान्यत शब्दाणुपात इति च विशेषतो निर्देश इत्यस्यादुष्टत्व सामान्यतो विशेषतो निर्देशनीयमिति विवेचितमस्माभि श्रोत्रप्राप्यकारित्वस्थापनायाम्। अपि चौदारिकवर्गणापुद्गलप्रक्षेपे पुद्गलप्रक्षेपातिचार भाषावर्गणापुद्गलाणुपाते च शब्दाणुपातातिचार इत्यनयोर्भेद, इति सिद्ध शब्दस्य द्रव्यसमुद्भूतत्वम्। तथा च पूर्वाचार्योक्तमनुमानमपि शब्दपौद्गलिकत्वसिद्धौ प्रमाणम्, तथा हि शब्द पौद्गलिक इन्द्रियार्थत्वाद्रूपादिवदित्यादि॥ तथा चोक्त स्थानाङ्गस्य जीवाभिगमाख्योपाङ्गे भगवद्भि । "से[1] नूण भंते सुब्भिसद्दपोग्गलाइ दुब्भिसद्दत्ताए परिणमंति हंता गोयमा" इत्यादिना,इत्थ च शब्दस्य सिद्धे पौद्गलिकत्वे यद्बौद्धेर्द्वादशायतननिरूपणावसरे शब्दायतनाख्यमायतनमुपकल्पित तदपि निरस्तम्, तस्याजीवतत्त्वप्रभेदरूपस्य पृथक्कल्पनानुचितत्वात्। यथा च तत्परिकल्पितानि द्वादशायतनानि तन्निरासप्रकारश्च द्वयमपि त-

१ स नून भदन्त सुरभिशब्दपुद्गला दुर्गन्धिशब्दतया परिणमन्ति। हन्त गौतम।

प्रसङ्गे निरूपयिष्याम इति। वर्णितश्चाजीवतत्वेऽन्त-र्भावः सूत्रकृताख्यद्वितीयाङ्गटीकायां शीलाङ्काचार्येरपि द्वादशे समवसरणाख्याध्ययने बौद्धनिरासावसरे "श-ब्दायतन च पौद्गलिकत्वाच्छब्दस्याजीवग्रहणेन ग्रह-णम्" इत्यादि, एवञ्च भाषास्वरूपमामूल "भाष्यत इति भाषा तद्योग्यतया परिणामितनिसृष्टनिसृज्यमानद्रव्य-संहतिः" इत्यादि भगवतीद्वितीयशतकपष्ठोद्देशकटी-कायामभयदेवसूरिभिः। तथा "वाग्योगप्रयत्ननिसृष्टो-ऽनन्तानन्तप्रादेशिकपुद्गलस्कन्धप्रतिविशिष्टपरिणामः शब्द पुद्गलद्रव्यसङ्घातभेदजन्मा" इत्यादि तत्त्वा-र्थवृत्तौ द्वितीयाध्याये सिद्धसेनगणिभिरपि सुष्ठु वि-वेचितम्॥ अत एव च रूपिद्रव्यावगाहिनोवधि-ज्ञानस्य जघन्यविषयत्व तैजसभाषान्तरालद्रव्या-णां सम्भवति, तथोक्तमावश्यकनिर्युक्तौ तट्टीकाया-ञ्च, "[१]तेयाभासादव्वाण अंतरे इत्थ लहइ पट्ठव-ओत्ति" इत्थञ्च द्रव्यभाववाग्लक्षणमावश्यकबृहद्वृत्युक्तम् १ द्रव्ययोगलक्षण चावश्यकसूत्रस्पर्शिकनिर्युक्ति-तट्टीकोक्तमपि २ उपपद्यते। तथाहि "वच् भाषणे वचनमुच्यतेऽनयेति वाक्, सापि चतुर्विधैव नामादि-भिः, तत्र द्रव्यवाक् शब्दपरिणामयोग्याः पुद्गला जीवप-

१ तेजोभाषाद्रव्याणामन्तरम् अत्र लभते प्रस्थापक इति॥

रिगृहीता, भाववान्पुनस्त एव पुद्गला शब्दपरिणाममापन्ना " इत्यादि १॥ "दव्वे मणवइकाए जोग्गदव्वत्ति" "मनोवाक्काययोग्यानि द्रव्याणि द्रव्ययोगः, एतदुक्त भवति जीवेनागृहीतानि गृहीतानि वा स्वव्यापाराप्रवृत्तानि द्रव्ययोग" इत्यादि २॥ अत एव च वाग्योगलक्षणमपि सूत्रोक्त सङ्गच्छते ॥ तथाहि " औदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्याजीवव्यापारो य स वाग्योग इत्यादि" विषमकलिकालकालिमकल्मपकर्दमकलङ्कप्रक्षालनजलनिधिप्रवाहवाक्प्रवाहा वादिवेताला शान्तिसूरिपादा उत्तराध्ययनीयचतुस्त्रिंशलेश्याध्ययनटीकायां जगु । तथा च " यया भाषाप्रायोग्यान् पुद्गलानादाय भाषात्वेन परिणमय्यावलम्ब्य मुञ्चति सा भाषापर्याप्ति " इति मलयगिरिभिर्भाषापर्याप्तेर्लक्षण षड्विधपर्याप्तिस्वरूपोपवर्णनप्रसङ्गे प्रज्ञापनाटीकोक्तमपि सङ्गच्छते । तथा च पञ्चास्तिकायटीकाकृदाशावसनवचनमपि " तत एव अमूर्त्तत्वादेव चाशब्द धर्म " इत्यादि, "एवमयमुक्तगुणवृत्ति परमाणु शब्दस्कन्धपरिणतिशक्तिस्वभावाच्छब्दकारणम्" इत्यादि च शब्दस्य नभोधर्मत्वाभाव परमाणुजन्यत्वञ्च प्रतिपादयति। एवञ्च भाषाया

पञ्चमद्रव्यवर्गणात्वमपि युक्तमाभाति, तथोक्तमावश्यकनिर्युक्तौ चतुर्दशपूर्वविद्भिः श्रुतकेवलिभिर्भद्रबाहुपादैः ओरालविउव्वाहारतेयभासाणुपाणमणकम्मे ॥ अह दव्ववग्गणाण कमोत्ति ॥ तथैव सम्वादित कर्मप्रकृतौ भव्यजनमनःकुमुदेन्दुभि· श्रीमच्छिवशर्मसूरिभि·,

जोगेहि तयणुरूवं, परिणमइ गिण्हिऊण पचतणू ।
पाउग्गे चालंवइ, भासाणुमणत्तणे खधे ॥१॥

प्रतिपादितश्च देवेन्द्रपूज्यैर्देवेन्द्रसूरिभिः शतकाख्यपञ्चमकर्मग्रन्थे ।

" इंगदुगणुगाइ जा अभवणतगुणिआणू ।
खधा उरलोचिअवग्गणाओ तह अगहण तरिया ॥१॥
एमेव विउव्वाहारतेअभासाणुपाणमणकम्मे ।

---

१ औदारिकवैक्रियाहारकतेजोभापानपानमनःकर्मसु ॥ अथ द्रव्यवर्गणानां क्रम इति ॥

२ योगैस्तदनुरूप परिणमयति गृहीत्वा पञ्चतनूनि ॥ प्रायोग्यांश्चालम्बते भापाणुमनोमयान् स्कन्धान् ॥१॥

३ एकद्विकाणुकादये यावदभव्यानन्तगुणिताणव । स्कन्धा औदारिकोचितवर्गणास्तथाग्रहणान्तरिताः॥ १ ॥ एवमेव वैक्रियाहारकतेजोभापानपानमन कर्मसु । सूक्ष्मा क्रमादवगाह ऊनोनाङ्गुलासङ्ख्येयांशः ॥ २ ॥

सुहुमा कमावगाहो ऊणूणगुलअसखसो ॥ २ ॥

उक्तश्च "तत उत्कृष्टाग्रहणवर्गणात एकपरमाण्वधिकस्कन्धरूपा जघन्या भाषाप्रायोग्या वर्गणा यत्पुद्गलान् गृहीत्वा जन्तव. सत्यादिभाषारूपतया परिणमय्यालम्ब्य च विसृजन्ति, तत एकैकपरमाण्वधिकस्कन्धरूपाभाषाप्रायोग्यावर्गणास्तावद्वाच्यायावदुत्कृष्ट"इत्यादि कर्मप्रकृतिविवरणयोर्मलयगिरियशोविजयोपाध्यायपुङ्गवाभ्याम्।ननुकिमर्थमेता औदारिकवैक्रियाहारकतैजस भाषादिद्रव्यवर्गणा प्ररूप्यन्तेतीर्थकृद्भिरितिचेत्,उच्यते प्रतिपत्तिहेतो ,यथा कश्चिद्गोपपतिर्गोपव्यामोहनिरासार्थ रक्तशुक्लादिभेदेन गवां वर्गणा कल्पितवास्तथा विनेयव्यामोहनिरासार्थ पुद्गलवर्गणा. परमाण्वादिभेदेन निरूपितवाञ्जगत्पतिस्तीर्थकर , तथा हि इह भरतक्षेत्रे मगधजनपदे प्रभूतगोमण्डलस्वामी कुचिकर्णो नाम धनपतिरभूत्, स च तासां गवामतिबाहुल्याद् सहस्रादिसङ्ख्यामितानां पृथक्पृथगनुपालनार्थ प्रभूतान् गोपान् न्ययुङ्क्त, तेऽपि च गोपा. परस्परसमिलितासु गोष्वात्मीया सम्यगजानाना सन्त विवदन्ते स्म, तांश्च परस्परतो विवदमानानुपलभ्यासौ कुचिकर्णस्तेषामव्यामोहार्थमधिकरणव्यवच्छित्तये च रक्तशुक्लकृ-

णकर्बुरादिभेदभिन्नानां गवां प्रतिगोपं विभिन्ना वर्गणाः खल्वव्यवस्थापितत्रानित्येष दृष्टान्तः, अयमत्रोपनयः। इह गोपपतिकुचिकर्णकल्पस्तीर्थकृत् गोपकल्पेभ्य शिष्येभ्योऽव्यामोहार्थं गोमण्डलसदृश पुद्गलास्तिकायमेकद्वित्रिसङ्ख्यातासङ्ख्यातानन्तादिपरमा वौदारिकवैक्रियाहारकतैजसभाषादिवर्गणाविभागेन प्ररूपितवान् इत्यादीत्यलमतिप्रसङ्गेनाप्रस्तुतत्वाद् विशेषजिज्ञासुना चावश्यककर्मप्रकृतिकर्मग्रन्थादिवृत्तिभ्योऽवसेयम्।शब्दशास्त्रविद्भिरपि वर्णानां स्थाननिरूपणप्रसङ्गे स्थानपदव्याख्यामिषेणशब्दोत्पत्तिप्रतिपादनद्वारातत्पौद्गलिकत्वमाख्यायि। यदुचुर्हेमसूरिपादा. स्वकृतसिद्धहेम शब्दानुशासने। 'यत्रपुद्गलस्कन्धस्य वर्णभावापत्तिस्तत्स्थानम्'॥किञ्चाङ्गलभूमिजैरपि प्रज्ञाशालिभि शब्दस्यपौद्गलिकत्व निरचायि, तथाहि शब्द. पौद्गलिक एव फोनोग्राफ़नामकयन्त्रेण सङ्गृह्यमाणत्वाद् वधिरकाचादिना च निरु यमानत्वादित्यादि । ननु शब्दनिमित्तानां कोष्ठथवायूनामेव यन्त्रविशेषतोऽवष्टभ्याभिधारण नतु शब्दानां, यतस्तेषामभिधारणेऽभ्युपगम्यमाने नानादिग्व्यवस्थितपुरुषश्रोत्राभिमुखानां वक्तृसाम्मुखीनयन्त्राभिधारणवद्विरुद्धदिग्व्यवस्थितयन्त्राभिधार-

णमपि स्यान्न चैव, तद्वायूनां तत्त्वे तेषां सम्मुखदिग्मात्रप्रसारिणां साम्मुखीनेनैव ग्रहण देशान्तरीणशब्दोत्पत्तिस्तु शब्दादेव तज्जन्यात् कदम्बगोलकन्यायात् वीचितरङ्गन्यायाद्वा, किञ्च शब्दाभिधारणे प्रत्यक्षस्वभावानां तेषां तदूयत्रातिसन्निहितकर्णैरुपलम्भोऽपि भवेत् अनध्यक्षस्वभावानां तेषां तथात्वे न कदाचिदपि तदुपलम्भ इति, न च वाय्वभिधारणे पुनस्तादृशशब्दोपलम्भ कथ, पूर्वोत्पन्नानां तेषां चिर विनष्टत्वादिति वाच्यम्, कण्ठादिस्थाने काद्यक्षरप्रयोजको यादृशपरमाणुप्रचयसमुद्भूतोऽवयवी तादृशपरमाणुप्रचयसमुद्भूतावयविविशेषस्य यन्त्रेऽपि स्वीकारात्तेन सहाभिधृतवायुसघट्टनतस्तत्रापि तादृशशब्दोत्पत्तेस्सम्भवात्, न च घकारोत्तराकारोत्तरटकारोत्तरात्वरूपस्य घटशब्दगतानुपूर्वीविशेषस्यावच्छिन्न प्रति तत्तच्छब्दगतेष्टसाधनत्वादिज्ञानचिकीर्षादिजन्यप्रयत्नविशेष एव कारणमिति तदभावात्तादृशानुपूर्वीविशेषावच्छिन्नशब्दोद्भव कथमिति वाच्यम्, प्रयत्नादीनां तत्तच्छब्दनिमित्तवायुविशेषप्रेरण एवोपक्षीणशक्तेस्तत्प्रेरितास्तु वायुविशेषा एव कण्ठताल्वादिस्थानेन संयुक्तास्त एव कण्ठताल्वादिस्थानसजातीयद्रव्यैरत्रापि

संयुज्यन्त इति तादृशशब्दोत्पत्तेः सम्भवादिति चेत्, न, अदृष्टचैरैतादृशकल्पनापेक्षया पौद्गलिकशब्दाभिधारणकल्पनायां लाघवात्, तथाहि स्त्रीपुनपुंसकोच्चरितशब्देषु वैजात्यन्तावदनुभूयमानं नापह्नोतुं शक्यते, नापि तन्न कस्यचिदपि कार्यतावच्छेदकमित्यभिधातुं युक्तं, ाथा सति कार्यमात्रवृत्तिजातिरिव तस्य न स्यात्, स्वञ्च त्तद्वैजात्यावच्छिन्न प्रति विलक्षणतत्तज्जातीयकण्ठताल्वादितत्तद्वायुसंयोग एव कारण तावद्भवद्भिरभ्युपगन्तव्य, नतु प्रयत्नादिकम्, यतस्समानेष्वपि प्रयत्नादिषु कस्यचित्पुसः स्त्रीशब्दसदृशशब्ददर्शनात्, तत्तत्स्त्रीपुनपुसककण्ठताल्वादिगतपरस्परविरुद्धनानावैजात्ययोगि च नैक वस्तु भवितुमर्हति, साङ्कर्यस्य जातिवाधकताया भवद्भिरेवाभ्युपगमात्, कारणे जातिसाङ्कर्ये कार्येऽपि तत्तत्कार्यवैजात्यसाङ्कर्ये चित्ररूपवल्लौकिकशब्दविलक्षण एव शब्दो यत्नत. प्रादुष्यान्न चैवम्, किञ्च न स्त्रीपुनपुसकानामेव परस्पर भेदात्तत्तज्जातीयोक्तशब्दभेद, किन्तु स्त्रीणां पुंसां नपुसकानामपि प्रत्येकशो मिथश्शब्दवैजात्यदर्शनादिति स्त्रीत्वादितत्तज्जात्यवान्तरवैजात्ययोगितत्तद्व्यक्तीयकण्ठताल्वादिगतनानावैजात्ययोग्यपि तद्वस्त्वभ्युपगन्तव्य यत्सयु-

क्तो यन्त्रावष्टब्धवायुस्तादृशशब्दजनकोऽभ्युपगत इति, तावतापि च नोपलभ्यमानशब्दप्रादुर्भावोपपादन सुष्ठु भवेत्, प्रत्युत पूर्वयुक्त्यातिविचित्रस्य लौकिकविलक्षणस्य शब्दस्यैव प्रादुर्भावस्तस्माद्भवेदितीदृशकुसृष्टिकल्पनापेक्षया यथोपलभ्यमानशब्दाभिधारणमेव न्याय्य लाघवात्॥ किञ्च वाद्यवादनोत्थशब्दानामपि यन्त्राभिधारण दृश्यते तत्र च वायोरनुपलम्भाद्वाय्वभिधारण न कल्पनार्हम्। न च वाद्यवादनोत्था शब्दा एव नोररीक्रियन्त इति वाच्य, तत्र तत्र भवद्भिरेवाङ्गीकारात्, तथाहि "वीणाप्रभवशब्दग्रह इति वीणाया शब्द," "कर्णेन वीणाशब्द शृणोमि इति वीणादौ शब्द" इति चिन्तामणिसन्निकर्षवादरहस्ये गङ्गेशोपाध्याय, " शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनि " इति कारिकावल्यां विश्वनाथपञ्चानन, " शब्द शृणोमीत्यनुभवसिद्धशब्दत्वजातिमान् शब्द स द्विधा ध्वनिर्वर्णश्च तत्र ध्वनि सङ्गीतशास्त्रसिद्धानेकभेदवांस्तत्करण मुरजवीणादि" इति कौण्डभट्टविरचिताया पदार्थदीपिकायामिति। शब्दस्याभिधारणाख्यसयोगविशेषसिद्धौ तेन क्रियावत्त्वमनुमीयते, क्रियावत्त्वात् सयोगविशेषवत्त्वाच्च द्रव्यत्वमिति प्रागेव व्यासतो विचारितम्॥ तथा

च सिद्ध शब्दवर्गणाजन्य शब्द इति॥ उक्तञ्च–विनयविजयोपाध्यायै लोकप्रकाशे एकादशसर्गे ॥

"गन्धद्रव्यादिवद्वाता–नुकूल्येन प्रसर्पणात् ॥
तादृशद्रव्यवच्छोत्रो–पघातकतयापि च ॥१॥
ध्वने, पौद्गलिकत्व स्या–द्यौक्तिक यत्तु केचन ॥
मन्यन्ते व्योमगुणतां, तस्य तन्नोपयुज्यते ॥२॥
अस्य व्योमगुणत्वे तु, दूरासन्नस्थशब्दयोः ॥
श्रवणे न विशेष' स्यात्, सर्वग खलु यन्नभः ॥३॥

॥इति सिद्ध शब्दस्य द्रव्यत्वम् ॥

लब्ध्वा गुरूपदेश, मतमधिगम्य च जिनेश्वरस्य तथा॥
जिनतत्त्वपरीक्षाया–माद्यो वर्गो न्यगादि मया ॥१॥

विरचय्यादिमवर्ग, समर्जित यन्मया सुकृतिगम्यम् ॥
पुण्य तेन लभन्तां, भव्याः सद्बोधिवररत्नम् ॥२॥

श्रीतपोगणनभोदिनमणीना सकलशिष्टसमयसमाचारविचारोचितवचोविस्तरमरीचिविदलितनिखिलजनतामिथ्यात्वतिमिराणा श्रीमद् भगवदर्हद्वदनारविन्दविनिर्गतागमग्रन्थादिविस्तीर्णश्रुतरत्नपारावारपारगतानां सुविशदसदासागमाबाधितगुरुपरम्परोपात्तोदात्तागमैदम्पर्याणा दुरन्तैकान्तवादमदमषीमलिनपरवादिव्रातविभेदनैकप्रमाणनयनिक्षेपानुयोगानुपमवारव्यतिकरोद्धतकेसरकेसरीणां सैद्धा-

न्तिकतार्किकचक्रचक्रवर्तिना शाब्दिकसाहित्यादिविविधषट्-
चूडामणिना भीमभवभ्रमणैकनिबन्धनमनोवृत्तिवशीकार-
महामन्त्रनिखिलश्रुतरत्नाराधनोपचारसदासागमावेदितयो-
गविद्यादिपीठपञ्चकाद्यनुष्ठानसमाचरणगणधरादिमहापुरुष-
समाराधितश्रीसूरिमन्त्राराधनावाप्तगणभृत्पदवीविभूषिता-
ना पञ्चाचारचारुचारित्रसम्यक्त्वज्ञानाद्यतिशयप्रभावस-
स्मारितपूर्वयुगप्रधानानां निःशेषसत्त्वार्णवोल्लासोत्सवान-
न्दचन्द्राननानां विद्वद्वृन्दवृन्दारकवन्दितक्रमसरोरुहाणां स-
र्वतन्त्रस्वतन्त्राणां बहुमानावनतानेकराजेन्द्रामात्यकोटिध्व-
जश्रेष्ठिवर्गादिमहासंसत्ससेवितपादेन्दीवराणां सकलसूरि-
पुरन्दराणां भट्टारकश्रीविजयनेमिसूरीश्वराणां क्रमकमल-
मकरन्दमरन्दास्वादलालचञ्चरीकेण मन्दमतिना विनेयाणुना
उदयविजयेन विशिष्टज्ञानोदयार्थं विरचितायां जैनतत्त्वप-
रीक्षायां श्रोत्रप्राप्यकारित्वशब्दद्रव्यत्वव्यवस्थापकः प्रथमो
वर्गः समाप्तः ॥

युगरसनन्देन्दुमिते, वर्षे मासे नभस्यशितपक्षे।
पञ्चम्यां भावपुरे, वर्गोऽयं पूर्णतामाप ॥१॥

॥ इति शम् ॥

